चित येन येन कायाद्याकारस्पर्शनादिद्रव्येन्द्रियसंबन्धिना देशेन सह यस्मिन् काले सम्बध्यते संयुज्यते तस्मिन् काले तस्य तन्मात्रज्ञानहेतुर्भवति— येन स्पर्शनादिद्रव्येन्द्रियदेशेन सम्बध्यते तज्जन्यस्यैव शीतादिविषयस्योष्णादिविषयस्य वैकतरविज्ञानस्य हेतुर्जायते, न तु येनेन्द्रियदेशेन सह तत्काले सम्बध्यते तद् न सम्बद्ध तज्जन्यज्ञानस्यापि हेतुरित्यर्थः। इतिशब्दो वाक्यसमाप्त्यर्थः। येनैवम्, तेन कारणेन नो नैव दूरभिन्नदेशे द्वे क्रिये कोऽपि युगपदुपलभते संवेदयत इति संबन्धः। कथंभूते द्वे क्रिये? इत्याह— पाद-शिरोगतशीतोष्णवेदनयोरनुभवनमनुभवस्तद्रूपे तदात्मिके। अत्र प्रयोग —इह पाद-शिरोगतशीतोष्णवेदने युगपद् न कोऽपि संवेदयते, भिन्नदेशत्वात्, विन्ध्य-हिमवच्छिखरस्पर्शनक्रियाद्वयवदिति 'अनुभवसिद्धत्वात्' इत्यसिद्धोऽस्य हेतुरिति ॥ २४२९-२४३० ॥ किञ्च,

उवओगमओ जीवो उवउज्जइ जेण जम्मि जं कालं। सो तम्मओवओगो होइ जहिंदोवओगम्मि ॥२४३१॥

एकोपयुक्तो जीवो नापरत्रोपयुक्त

( उपयोगमयो जीव उपयुज्यते येन यस्मिन् यस्मिन् काले। स तन्मयोपयोगो भवति यथेन्द्रोपयोगे ॥ २४३१ ॥ )

उपयोगेनैव केवलेन निर्वृत्त उपयोगमयो जीवः। ततः स येन केनापि स्पर्शनादीन्द्रियदेशेन करणभूतेन यस्मिन् शीतोष्णाद्यन्यतरविषये 'जं कालं ति' यस्मिन् काले उपयुज्यते सावधानो भवति तन्मयोपयोगो भवति— यत्र शीताद्यन्यतरार्थे उपयुक्तस्तन्मयोपयोग एव भवति नान्यत्रोपयुक्त इत्यर्थः। उदाहरणमाह—'जहिंदोवओगम्मि त्ति' यथेन्द्रोपयोगे वर्तमानो माणवकस्तन्मयोपयोग एव भवति, न पुनरर्थान्तरसंगोपयोगः। इदमत्र तात्पर्यम्— एकस्मिन् काले एकत्रैवार्थे उपयुक्तो जीवः सम्भवति, न त्वर्थान्तरे, पूर्वोक्तसाङ्कर्यादिदोषप्रसङ्गात्, ततश्च युगपत्क्रियाद्वयोपयोगानुभवोऽसिद्ध एवेति ॥ २४३१ ॥ एकस्मिन्नर्थे उपयुक्तः किमित्यर्थान्तरेऽपि नोपयुज्यते? इत्याह—

सो तदुवओगमेत्तोवउत्तसत्ति त्ति तस्समं चेव। अत्थंतरोवओगं जाउ कहं केण वंसेण? ॥२४३२॥

( स तदुपयोगमात्रोपयुक्तशक्तिरिति तत्सममेव। अर्थान्तरोपयोगं यातु कथं केन वांशेन? ॥ २४३२ ॥ )

स जीवः 'तदुवओगमेत्तोवउत्तसत्ति त्ति' तस्य विवक्षितस्यार्थस्योपयोगस्तदुपयोगः स एव तन्मात्रं तत्रोपयुक्ता व्यापृता निष्ठां गता शक्तिर्यस्य स तदुपयोगमात्रोपयुक्तशक्तिरिति कृत्वा कथं तत्समकालमेवार्थान्तर उपयोगं यातु? न कथञ्चिदित्यर्थः साङ्कर्यादिप्रसङ्गात्। किञ्च, सर्वैरपि स्वप्रदेशैरेकस्मिन्नर्थे उपयुक्तो जीवः केनोद्धरितेनांशेनार्थान्तरोपयोगं व्रजतु?। नास्त्येव हि स कश्चिदुद्धरितोंऽशो येन तत्समकमेवार्थान्तरोपयोगमसौ गच्छेदिति भावः ॥ २४३२ ॥

यदि समकालमेव क्रियाद्वयोपयोगो न भवति, तर्हि कथमहं तं संवेदयामि? इत्याशङ्क्याह—

समयाइसुहुमयाओ मन्नसि जुगवं च भिन्नकालं पि। उप्पलदलसयवेहं व जह व तदलायचक्कं ति। २४३३

समयस्य सूक्ष्मत्वादुपयोगद्वये यौगपद्य-

( समयादिसूक्ष्मतातो मन्यसे युगपच्च भिन्नकालमपि। उत्पलदलशतवेधमिव यथा वा तदलातचक्रमिति ॥ २४३३ ॥ )

समयावलिकादिकालकृतविभागस्य सूक्ष्मत्वाद् भिन्नकालमपि कालविभागेन प्रवृत्तमपि क्रियाद्वयसंवेदनमुत्पलपत्रशतवेधवद् युगपत् प्रवृत्तमिव मन्यसे त्वम् । न हि उत्पलपत्रशतमौत्तराधर्येण व्यवस्थापितं सुतीक्ष्णयापि सूच्या छेकेन समर्थेनापि च वेधकर्त्रा समकालमेव विध्यते, किन्तु कालभेदेन, उपर्यु परितनेऽविद्धेऽधोऽधोवर्तिनः पत्रस्य वेधायोगात्, अथ च वेधकर्ता युगपद् विहितमेव वेधं मन्यते, तद्वेधन-कालभेदस्य सूक्ष्मत्वेन दुर्लक्षत्वात् । यथा वा तत् प्रसिद्धमलातचक्रं कालभेदेन दिक्षु भ्रमदपि भ्रमणकालभेदस्य सूक्ष्मत्वेन दुरवगमत्वाद् निरन्तरभ्रमणमेव लक्ष्यते । एवमिहापि शीतोष्णक्रियानुभवकालभेदस्य सूक्ष्मत्वेन दुरवसेयत्वाद् युगपदिव तदनुभवं मन्यते भवानिति ॥ २४३३ ॥ मनोऽपि शिरःपादादिभिः स्पर्शनेन्द्रियदेशैरिन्द्रियान्तरैश्च युगपद् न सम्बध्यते किन्तु क्रमेणैव, केवलमाशुचारित्वेन सूक्ष्मत्वेन च तस्य क्रमसम्बन्धो न लक्ष्यत इति दर्शयन्नाह—

चित्तं पि नेंदियाइं समेइ सममह य खिप्पचारि त्ति। समय व सुक्कसक्कुलिदसणे सव्वोवलद्धि त्ति॥२४३४॥

( चित्तमपि नेन्द्रियाणि समेति सममथ च क्षिप्रचारीति । समकमिव शुष्कशष्कुलीदशने सर्वोपलब्धिरिति ॥ २४३४ ॥ )

'चित्तमपि च नेन्द्रियाणि समकमेव समेति'—मनोऽपि नैवेन्द्रियैः सह युगपत् सम्बध्यत इत्यर्थः । उपलक्षणत्वाद् नापि शिरःपादादिभिः स्पर्शनेन्द्रियदेशैर्युगपत् सम्बध्यते, अथ च क्षिप्रचारि शीघ्रसंचरणशील तदिति कृत्वा समकमिव युगपदिव 'सर्वत्र सम्बद्धं लक्ष्यते' इति शेषः । दृष्टान्तमाह— समय वेत्यादि' । 'समय वा' इत्येतदनन्तरं योजितमप्यावृत्त्या पुनरपीह योज्यते । तत्र वाशब्दो यथार्थे । यथा-शब्दश्च दृष्टान्तोपन्यासार्थः । यथा शुष्कशष्कुलिकादशने सर्वेषामपि शष्कुलिकागतरूप रस गन्ध स्पर्श शब्दानामुपलब्धिः सर्वोपलब्धिः समक इव, तथाऽत्रापि मनः शिरःपादादिभिः स्पर्शनेन्द्रियदेशैरिन्द्रियान्तरैश्च क्रमेण सम्बध्यमानमपि युगपत् संबध्यमानं लक्ष्यत इत्यर्थः । इदमत्र हृदयम्—इह दीर्घां शुष्कां च शष्कुलिकां कस्यचिद् भक्षयतस्तद्रूपं चक्षुषा वीक्षमाणस्य रूपज्ञानमुत्पद्यते, तद्गन्धं च घ्राणे-नाऽऽजिघ्रतो गन्धज्ञानम्, तद्रसं च रसनयाऽऽस्वादयतो रसज्ञानम्, तत्स्पर्शं च स्पर्शनेन वेदयतः स्पर्शज्ञानम्, चर्वणोत्थं तच्छब्दं च शृण्वतः शब्दज्ञानमुपजायते । एतानि च पञ्चापि ज्ञानानि क्रमेणैव जायन्ते, अन्यथा साङ्कर्यादिदोषप्रसङ्गात्, मत्यादिज्ञानोपयोगकाले चावध्याद्युप-योगस्यापि प्राप्तेः, एकत्र घटादिवस्तुनि विकल्पयतोऽनन्तानामपि घटाद्यर्थविकल्पानां प्रवृत्तिप्रसङ्गाच्च । न चैतदस्ति । ततः क्रमेण जायमा-नान्यप्येतानि ज्ञानानि प्रतिपत्ता 'युगपदुत्पद्यन्ते' इति मन्यते, समयाऽऽवलिकादिकालविभागस्य सूक्ष्मत्वात् । एवमिहापि शिरःपादादिभिः स्पर्शनेन्द्रियदेशैरिन्द्रियान्तरैश्च क्रमेण सम्बध्यमानमपि मनः प्रतिपत्ता युगपत् सम्बध्यमानमध्यवस्यति । न तु तत्त्वतोऽसौ मनसः स्वभावः, तथा चोक्तम्—''युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्'' इति (न्या० भा० १-१-१६) । यदि चोक्तन्यायेन सेन्द्रियद्वारेणोत्पद्यमान उपलम्भे क्रमेण संचरतो मनसः संचारो दुर्लक्ष्यः, तर्हि कथमेकस्यैव स्पर्शनेन्द्रियमात्रस्य शीतवेदनोपयोगादुष्णवेदनोपयोगरूप उपयोगान्तरे गच्छतस्तत्संचारः

शष्कुलिका दृष्टान्ते क्रमिकरूपादि ज्ञानानि

सुलक्ष स्यात्, अलक्ष्यमाणे च तत्क्रमसचारे शीतोष्णक्रियाद्वयोपयोगविषयौ युगपदध्यवसायौ भवतः इति ॥ २४३४ ॥ एतदेवाह—

सव्वेंदिओवलंभे जइ संचारो मणस्स दुल्लक्खो । एगिंदिओवओगंतरम्मि किह होउ सुलक्खो ? ॥२४३५॥

( सर्वेन्द्रियोपलम्भे यदि सचारो मनसो दुर्लक्ष । एकेन्द्रियोपयोगान्तरे कथं भवतु सुलक्ष ? ॥ २४३५ ॥ )

व्याख्यातार्थेव ॥ २४३५ ॥ यदि पुनरेकस्मिन्नर्थे उपयुक्तमपि मनोऽर्थान्तरेऽप्युपयोग गच्छेत् तदा को दोषः स्यात् ? इत्याह—

अन्नविणिउत्तमण्णं विणिओगं लहइ जइ मणो तेणं । हत्थिं पि ट्ठियं पुरओ किमण्णचित्तो न लक्खेइ ?

( अन्य विनियुक्तमन्यं विनियोगं लभते यदि मनस्तेन । हस्तिनमपि स्थित पुरत किमन्यचित्तो न लक्षयति ? ॥ २४३६ ॥ )

अन्यस्मिन् शीतवेदनादिकेऽर्थे विनियुक्तमुपयुक्तमन्यविनियुक्त मनो यदि 'अण्णं ति' अन्य उष्णवेदनादिकोऽर्थस्तद्विषयोपयोगो-

ऽन्यस्तमन्य विनियोगमुपयोग लभते, 'तेण' त्ति तर्हि किमित्यन्यचित्तोऽन्यार्थोपयुक्तचित्तो देवदत्तादिर्हस्तिनमपि पुरतो व्यवस्थितं न लक्ष-

यति ? । तस्मादेकस्मिन्नर्थे उपयुक्त मनो न कदाचिदन्यार्थोपयोग लभत इति ॥ २४३६ ॥

यदि चैकोपयोगे उपयोगान्तरमपीष्यते तदेतदपि किं नेष्यते ? । किम् ? इत्याह—

विणिओगन्तरलाभे व किं त्थ नियमेण तो समं चेव । पइवत्थुमसंखेज्जाऽणंता वा जं न विणिओगा ? २४३७

( विनियोगान्तरलाभे वा किमत्र नियमेन तत सममेव । प्रतिवस्त्वसंख्येया अनन्ता वा यद् न विनियोगा ? ॥ २४३७ ॥ )

एकोपयोगकाले विनियोगान्तरस्योपयोगान्तरस्य वा लाभे(प्र० लाभे वा)ऽभ्युपगम्यमाणे 'तो' त्ति ततः किमत्र क्रियाद्वयोपयोगलक्षणेन

नियमेन, 'जं' ति यत् प्रतिवस्त्वसंख्येया अनन्ता वा सममेव युगपदेव विनियोगा उपयोगा नेष्यन्ते ? । इदमुक्तं भवति— यदि शीतवेदनो-

पयोगकाले उष्णवेदनोपयोगोऽपीष्यते, तर्हि किमनेन क्रियाद्वयोपयोगनैयत्येन, यदसंख्येया अनन्ता वा प्रतिवस्तु युगपदुपयोगा न भवन्ति,

सर्वेषु कालेषु द्वितीयोपयोगस्तथा बहवोऽपि भवन्त्विति भाव. । इह च 'दव्वाओ असंखेज्जे संखेज्जे यावि पज्जवे लहइ' इति (गा०-७६०)

वस्तुनादेकस्मिन्नर्थे समकालमवधिज्ञानिनः किलोत्कृष्टतोऽसंख्येया उपयोगाः प्राप्नुवन्ति, शेषज्ञानिना त्वनन्ता इत्यभिप्रायवता प्रोक्तम्—'पइवत्थु-

मसंखेज्ज'— इत्यादि ॥ २४३७ ॥ अत्र पराभिप्रायमाविष्कृत्य परिहारमाह—

बहु-बहुविहाइगहणे नणूवओगबहुया सुएऽभिहिआ । तमणेगग्गहणं चिय उवओगाणेगया नत्थि ।२४३८

( बहु बहुविधादिग्रहणे ननूपयोगबहुता श्रुतेऽभिहिता । तदनेकग्रहणमेवोपयोगानेकता नास्ति ॥ २४३८ ॥ )

ननु बहु बहुविध क्षिप्रा-ऽनिश्रिता ऽसंदिग्ध ध्रुव-सेतरवस्तुग्रहणे पूर्वमिहैवावग्रहादीनामनुज्ञाते एकस्मिन्नुपयोगबहुता श्रुतेऽभिहितैव,

इति 'पइवत्थुमसंखेज्ज-' इत्यादि सिद्धसाधनमेव, इति परेणोक्ते सत्याह—'तमणेगेत्यादि' । तद् बहु-बहुविधादिरूप वस्तुनोऽनेकपर्यायाणा

युगपदुपयोगद्वये सभवन्ति कथं नानन्तोपयोगाः ?

बहुबहुविधादीनां पर्यायत्वान्नानेकोपयोगाः

८ न विलक्खणाइं समयं सामण्ण-भेयनाणाइं। वहुयाण को विरोहो समयम्मि विसेसनाणाणं ?।२४४६।

( भवेता न विलक्षणे समकं सामान्य भेदज्ञाने । वहुकाना को विरोध समये विशेषज्ञानानाम् ? ॥ २४४६ ॥ )

नन्वाचार्य ! एवं तर्हि अस्तु यदुत– सामान्यवेदनामात्रग्राहकं सामान्यज्ञान, शीतोष्णवेदनाविशेषग्राहकं विशेषज्ञानरूप भेदज्ञान च, इत्येते द्वे अपि सुदूरविलक्षणत्वात् समक युगपद् न भवतः, वहूना तु शीतोष्णादिविशेषज्ञानाना समय एकस्मिन् काले जायमानाना विशेषज्ञानरूपतया तेषां वहूनामपि तुल्यत्वेन वैलक्षण्याभावात् को विरोधः, येन शीतोष्णवेदनाविशेषज्ञाने युगपद् भवतः निषिध्येते ? इति ॥ ॥७२॥ विशेषा० भागः–२

२४४६ ॥ अत्रोत्तरमाह—

लक्खणभेयाउ च्चिय सामण्णं च जमणेगविसयं ति। तमघेत्तुं न विसेसन्नाणाइं तेण समयम्मि॥२४४७॥

तो सामन्नग्गहणाणंतरमीहियमवेइ तब्भेयं । इय सामन्नविसेसावेक्खो जावंतिमो भेओ ॥२४४८॥

( लक्षणभेदादेव सामान्यं च यदनेकविषयमिति । तदगृहीत्वा न विशेषज्ञानानि तेन समये ॥ २४४७ ॥ )

( तत सामान्यग्रहणानन्तरमीहितमवैति तद्भेदम् । इति सामान्यविशेषापेक्षा यावदन्तिमो भेद ॥ २४४८ ॥ )

तेन कारणेन समय एकस्मिन् काले वहूनि विशेषज्ञानानि न भवन्ति । कुतः ? इत्याह—लक्षण शीतोष्णादिविशेषाणां स्वरूपं तस्य परस्पर भेदाद् भिन्नत्वाद् न तद्ग्राहकाणि ज्ञानानि समक भवन्ति, यस्माच्चानेकविषयमनेकाधारं सामान्यम्, इत्यतस्तदगृहीत्वा न विशेषज्ञानानि । इदमुक्त भवति– पूर्व वेदनासामान्य गृहीत्वा तत ईहा प्रविश्य 'शीतेयं पादयोर्वेदना' इति वेदनाविशेषं निश्चिनोति । शिरस्यपि प्रथमं वेदनासामान्यं गृहीत्वा तत ईहा प्रविश्य 'उष्णेयमिह वेदना' इत्यध्यवस्यति । न हि घट विशेषज्ञानादनन्तरमेव पटाश्रयसामान्यरूपेऽगृहीते पटविशेषज्ञानमुपजायते 'उग्गहो ईहअवाओ य' (गा०–१७८) इत्यमुनैव क्रमेण घटादिविशेषज्ञानोत्पत्त्यभिधानात् । एवं च सति विशेषज्ञानादनन्तरमपि विशेषज्ञानं नोत्पद्यते, आस्ता पुनः समकालम्, सामान्यस्यानेकविशेषाश्रयत्वात् । तच्च पूर्वमगृहीत्वा विशेषज्ञानस्याप्रसवादिति । अनेकविशेषाणां स्वरूपभेदान्न युगपज्ज्ञानानि । प्रत्येकविशेषज्ञानस्य सामान्यज्ञानपूर्वकत्वादेव नापरविशेषज्ञानाव्यवहितोत्तरत्वमपि

यतश्चैव सामान्येऽगृहीते नास्ति विशेषज्ञानम्, 'तो' त्ति ततः सामान्यग्रहणानन्तरमीहित तद्भेद सामान्यभेदं घटत्वादिसामान्याश्रय घटादिविशेषमित्यर्थः, अवैति–'घटादिरेवाऽयम्' इत्येवं निश्चिनोतीत्यर्थः । तत उत्तरभेदापेक्षया घट एव सामान्यम् । तस्मिंश्च गृहीते ईहित्वा 'धातुजोऽयम्, न मार्त्तः' इत्येवं निश्चिनोति । ततो धातुजोऽप्युत्तरभेदापेक्षया सामान्यम् । तस्मिंश्च गृहीते ईहित्वा 'ताम्रोऽय न राजतादिः' इतीत्थ निश्चिनोतीति । एव सामान्य-विशेषापेक्षा तावत् कर्तव्या यावदन्तिमो भेदः स कश्चिद् यदनन्तरमीहा न प्रवर्तते । ततश्च नैव न क्वापि विशेषज्ञानाना युगपत्प्रवृत्तिसंभव , सामान्यरूपतया तु समकालमपि विशेषाणा ग्रहणं भवेत्, यथा सेना, वनमित्यादि, न तु

युगपदुपयोग इत्युक्तमेव । तथा च सति भिन्नकाले एव शीतोष्णविज्ञाने । ततो भ्रान्तमेव समकाल शीतोष्णक्रियाद्वयवेदन भवत इति ॥

२४४७ २४४८ ॥ इत्यादियुक्तिशतैः प्रज्ञापितोऽपि न स्वाग्रह मुक्तवान् गङ्गः । तत किम् ? इत्याह—

इय पण्णविओ वि जओ न पवज्जइ तो तओ कओ वज्झो । तो रायगिहे समयं किरियाओ दो परूवंतो ।२४४९।

मणिनागेणारुद्धो (प्र० रुद्धो) भओववत्तिओ पडिबोहिओ वोत्तुं । इच्छामो गुरुमूलं गंतूण तओ पडिक्कंतो ॥

( इति प्रज्ञापितोऽपि यतो न प्रपद्यते तत सघो कृतो बाह्य । ततो राजगृहे समकक्रिये द्वे प्ररूपयन् ॥ २४४९ ॥ )

( मणिनागेनारुद्धो (प्र० रुद्धो) भयोपपत्तित प्रतिबोधित उक्त्वा । इच्छामो गुरुमूलं गत्वा तत प्रतिक्रान्त ॥ २४५० ॥ )

व्याख्यातार्थे एव ॥ इति गाथाविंशतिगाथार्थः ॥ २४४६-२४५० ॥

## ॥ इति गङ्गाख्यः पञ्चमो निह्नवः समाप्तः ॥

६ निह्नवो रोहगुप्तः, तस्य त्रैराशिकदृष्टिः

अथ षष्ठनिह्नवक्तव्यतामभिधित्सुराह—

पंच सया चोयाला तइया सिद्धिं गयस्स वीरस्स । पुरिमंतरंजियाए तेरासियादिट्ठि उप्पन्ना ॥२४५१॥

( पञ्च शतानि चतुश्चत्वारिंशता तदा सिद्धिं गतस्य वीरस्य । पुर्यामन्तरञ्जिकायां त्रैराशिकदृष्टिरुत्पन्ना ॥ २४५१ ॥ )

पञ्च वर्षशतानि चतुश्चत्वारिंशदधिकानि तदा सिद्धिं गतस्य श्रीमन्महावीरस्य, अत्रान्तरेऽन्तरञ्जिकायां पुर्यां त्रैराशिकदृष्टिः समुत्पन्नेति ।

॥ २४५१ ॥ कथमुत्पन्ना ? इत्याह—

रोहगुप्ताधिकारः

पुरिमंतरंजि भूयगिह बलसिरि सिरिगुत्त रोहगुत्ते य । परिवायपोट्टसाले घोसणपडिसेहणा वाए ॥२४५२॥

( पुर्यन्तरञ्जिका भूतगृहं बलश्री श्रीगुप्तो रोहगुप्तश्च । परिव्राजकपोट्टशालो घोषणप्रतिषेधना वादे ॥ २४५२ ॥ )

सग्रहगाथेयम् । अस्याश्च कथानकादर्थोऽवसेयः । तच्चेदम्— अन्तरञ्जिका नाम नगरी । तस्याश्च बहिर्भूतगृहं नाम चैत्यम् । तत्र च श्रीगुप्तनामाचार्यः स्थित. । तस्यां च नगर्यां बलश्रीर्नाम राजा । श्रीगुप्ताचार्याणां च रोहगुप्तो नाम शिष्योऽन्यत्र ग्रामे स्थित आसीत् । सोऽन्यदा गुरुवन्दनार्थमन्तरञ्जिकायामायातः । तत्र चैकः परिव्राजको लोहपट्टकेनोदरं बद्ध्वा जम्बूवृक्षशाखया च हस्ते गृहीतया नगर्यां भ्राम्यति । 'किमेतत् ?' इति च लोकेन पृष्टो वदति—'मदीयोदरमतीव ज्ञानेन पूरितत्वात् स्फुटतीति लोहपट्टेन बद्धम्, 'जम्बूद्वीपमध्ये च मम प्रतिवादी नास्ति' इत्यस्यार्थस्य सूचनार्थं जम्बूवृक्षशाखा हस्ते गृहीता । ततस्तेन परिव्राजकेन सर्वस्यामपि नगर्यां 'शून्याः सर्वेऽपि परप्रवादाः, नास्ति कश्चिद् मम प्रतिवादी' इत्युद्घोषणापूर्वकः पटहको दापितः । लोहपट्टबद्धपोट्ट—जम्बूवृक्षशाखायोगाच्च तस्य लोके 'पोट्टशाल' इति नाम जातम् । ततस्तं पटहकं नगरीं प्रविशता रोहगुप्तेन दृष्टः, उद्घोषणा च श्रुता । ततो 'अहं तेन सार्धं वादं दास्यामि' इत्यभिधाय गुरु-

नष्टद्वापि निषिद्धस्तेनासौ पटहकः । गुरुसमीपं चागत्यालोचयता कथितोऽयं व्यतिकरस्तेषाम् । आचार्यैः प्रोक्तम्– न युक्तं त्वयाऽनुष्ठितम्, स हि परिव्राजको वादे निर्जितोऽपि विद्यास्वतिकुशलत्वात् तामिरुपतिष्ठति । तस्य चैताः सप्त विद्या बाढं स्फुरन्ति ॥ २४५२ ॥

काः पुनस्ताः ? इत्याह—

विच्छू य सप्पे मूसग मिगी वराही य काग पोयाई। एयाहिं विज्जाहिं सो य परिवायगो कुसलो ॥२४५३॥ रिभाजक-सप्तविद्या.

( वृश्चिकी सर्पी मूषकी मृगी वराही काकी पोताकी । एताभिर्विद्याभि स च परिव्राजक कुशल ॥ २४५३ ॥ )

'विच्छू य' त्ति वृश्चिकप्रधाना विद्या गृह्यते । 'सप्पे त्ति' सर्पप्रधाना विद्या । 'मूसगे त्ति' मूषकप्रधाना । तथा मृगी नाम विद्या मृगीरूपेणोपघातकारिणी । एवं वराही च । 'काग पोयाई त्ति' काकविद्या, पोताकीविद्या च । पोताक्यः शकुनिकाः । एतासु विद्यासु, एताभिर्वा विद्याभिः स परिव्राजकः कुशल इति । ततो रोहगुप्तेनोक्तम्–'यद्येवम्, तत् किमिदानीं नष्टुं क्वापि शक्यते ?, निषिद्धस्तत्पटहकः, यद् भाति तद् भवतु' । ततः सूरिभि. प्रोक्तम्–'यद्येवम्, तर्हि पठितसिद्धा एनाः सप्त तत्प्रतिपक्षविद्या गृहाण ॥ २४५३ ॥

काः पुनस्ता. ? इत्याह—

मोरी नउली बिराली वग्घी सिही य उलुगि उवाई। एआओ विज्जाओ गिण्ह परिव्वायमहणीओ २४५४

( मोरी नकुली बिडाली व्याघ्री सिंही चोलुकी उलावकी । एता विद्या गृहाण परिव्राजकमथनी ॥ २४५४ ॥ )

वृश्चिकाणा प्रतिपक्षभूता मयूरीविद्या । सर्पाणा तु प्रतिपक्षभूता नकुली । मूषकाणां बिडाली । एवं व्याघ्री, सिंही, उलूकी । 'उवाइ त्ति' पोताकीप्रतिपक्षभूता उलावकप्रधाना विद्येत्यर्थ. । एता. परिव्राजकमथनीर्विद्या गृहाण त्वम् । इति सूरिणा प्रोक्ते गृह्णाति रोहगुप्तस्ताः । तथा रजोहरणं चाभिमन्त्र्य सूरिभिस्तस्य समर्पितम् । अभिहितश्च तथा यद्यन्यदपि किञ्चित् तत्प्रणीतक्षुद्रविद्याकृतमुपसर्गजातमुपतिष्ठते तदा निवारणार्थमेतद् मस्तकस्योपरि भ्रमणीयम् । ततश्चेन्द्रा(प्र० ततश्चैन्द्री)णामप्यजेयो भविष्यसि, किमुत मनुष्यमात्रस्य तस्येति । ततश्च गतो राजसभां रोहगुप्त' । प्रोक्तं च तत्र तेन–'किमेष द्रमक. परिव्राजको जानाति ?, करोत्वयमेव यदृच्छया(प्र० ..यदृक्षया) पूर्वपक्षम्, येनाहं निराकरोमि' । तत' परिव्राजकेन चिन्तितम्–निपुणा. खल्वमी भवन्ति, तदमीषामेव संमतं पक्षं परिगृह्णामि, येन निराकर्तुं न शक्नोति । चिन्तयित्वा गदमभ्यधायि–'इह जीवाश्चाजीवाश्चेति द्वावेव राशी, तथैवोपलभ्यमानत्वात्, शुभा-ऽशुभादिराशिद्वयवत्' इत्यादि । ततो गुप्तेन तद्बुद्धिपरिभवनार्थं स्वमतोऽप्यय पक्षो निराकृत' । कथम् ? इति चेत् । उच्यते–असिद्धोऽय हेतु., अन्यथोपलम्भात्, जीवा अजीवा नोजीवाश्चेति राशित्रयदर्शनात् । तत्र जीवा नरक तिर्यगादय , अजीवास्तु परमाणु-घटादयः, नोजीवास्तु गृहकोकिलापुच्छादयः । ततो जीवा ऽजीव-नोजीवरूपास्त्रयो राशयः, तथैवोपलभ्यमानत्वात्, अधम-मध्यमो त्तमादिराशित्रयवत्, इत्यादियुक्तिभिर्निष्प्रश्नव्याकरणः कृत्वा

ततो रोहगुप्तस्तत्प्रतिपक्षभूतमयूरीविद्यया जितः परिव्राजको रोहगुप्तेन । ततोऽसौ क्रुद्धो वृश्चिकविद्यया रोहगुप्तविनाशार्थं वृश्चिकान् मुञ्चति । ततो रोहगुप्तस्तत्प्रतिपक्षभूतमयूरीविद्यया मयूरान् मुञ्चति । तैश्च वृश्चिकेषु हतेषु परिव्राजकः सर्पान् मुञ्चति । इतरस्तत्प्रतिघातार्थं नकुलान् निसृजति । एवं मूषिकाणां बिडालान्, मृगीणां व्याघ्रान्, शूकराणां सिंहान्, काकानामुलूकान्, पोताकीनामुलावकान् मुञ्चति । ततो गर्दभी मुक्ता । तां चागच्छन्तीं दृष्ट्वा रोहगुप्तेन रजोहरणं मस्तकस्योपरि भ्रमयित्वा तेनैव रजोहरणेन ताडिता सती परिव्राजकस्योपरि मूत्र-पुरीषोत्सर्गं कृत्वा गताऽसौ । ततः सभापतिना, सर्वैः, समस्तलोकेन च निन्द्यमानो नगराद् निर्वासितः परिव्राजकः ॥ २४५४ ॥ इतः परं यदभूत् तद् भाष्यकारः प्राह—

वायम्मि मए विजिओ सुणह जहा सो सहामज्झे ॥२४५५॥ अपसिद्धान्ते दूषणार्थं गुर्वाज्ञा
जेऊण पोट्टसालं छलुओ भणइ गुरुमूलमागंतुं । गिहकोकिलाइपुच्छच्छेओदाहरणओऽभिहिए ॥२४५६॥
रासिदुगगहियपक्खो तइयं नोजीवरासिमादाय । अयमवसिद्धंतो णे तइओ नोजीवरासि त्ति ॥२४५७॥
भणइ गुरू सुट्ठु कयं किं पुण जेऊण कीस नाभिहियं । सिद्धंतो किंतु मए बुद्धिं परिभूय सो समिओ ॥२४५८॥
वं गए वि गंतुं परिसामज्झम्मि भणसु नायं णे । जइ नाम जीवदेसो नोजीवो हुज्ज को दोसो ? ॥२४५९॥
बहुसो स भणमाणो गुरुणा, पडिभणइ किमवसिद्धंतो ।

(वादे मया निर्जितः शृणुत यथा स सभामध्ये ॥ २४५५ ॥)
(जित्वा पोट्टशालं षडुलूको भणति गुरुमूलमागत्य । गृहकोकिलादिपुच्छच्छेदोदाहरणतोऽभिहिते ॥ २४५६ ॥)
(राशिद्विकगृहीतपक्षस्तृतीयं नोजीवराशिमादाय । अयमपसिद्धान्तो नस्तृतीयो नोजीवराशिरिति ॥ २४५७ ॥)
(भणति गुरुः सुष्ठु कृतं किं पुनर्जित्वा कस्माद् नाभिहितम् । सिद्धान्तः किन्तु मया बुद्धिं परिभूय स शमितः ॥ २४५८ ॥)
(एवं गतेऽपि गत्वा परिषन्मध्ये भण नाऽयं नः । यदि नाम जीवदेशो नोजीवो भवेत् को दोषः ? ॥ २४५९ ॥)
(बहुशः स भण्यमानो गुरुणा प्रतिभणति किमपसिद्धान्तः ।

व्याख्या— पोट्टशालपरिव्राजकं जित्वा गुरुचरणमूलमागत्य रोहगुप्तोऽपरनाम्ना तु षडुलूको भणति— स परिव्राजकाधमः समस्तनृपसामान्यं यथा वादे मया निर्जितस्तथा शृणुत यूयं, कथयामीति । तदेवाह—राशिद्वयगृहीतपक्षः स परिव्राजको मया वादे निर्जित इति प्राक्तनेन सम्बन्धः । किं कृत्वा ? इत्याह—तृतीयं नोजीवराशिमादाय पक्षीकृत्य । कुतो दृष्टान्तादसौ पक्षीकृत्य ? इत्याह— गृहकोकिलादीनां पुच्छमेव छिन्नमात्रच्छेदस्तदुदाहरणतस्तद्दृष्टान्तादित्यर्थः । एवं रोहगुप्तेनाभिहिते गुरुर्भणति—सुष्ठु कृतं त्वया यदसौ जितः, किन्तु तत उत्तिष्ठता त्वया किमेतद् नाभिहितम् ? । किम् ? इत्याह—तृतीयो नोजीवराशिरित्ययं 'णे त्ति' नोऽस्माकमपसिद्धान्तः, जीवाऽजीवलक्षणराशिद्वयस्यैवाऽस्मत्सिद्धान्तेऽभिहितत्वादिति । तस्मादेवं गतेऽप्येतावत्यपि गते इत्यर्थः, तत्र परिषन्मध्ये गत्वा भण प्रतिपादय 'नायं णे त्ति' नोऽस्माकं नायं सिद्धान्तः, किन्तु स परिव्राजकस्तद्बुद्धिं परिभूय तिरस्कृत्य शमितः उपशमं नीतो दर्पं त्याजित इत्यर्थः । एवं बहुशोऽनेकधा गुरुणा भण्यमानः स

गुरुः प्रतिभणति प्रत्युत्तरयति– आचार्य ! किमयमपसिद्धान्तः ? । यदि हि नोजीवलक्षणतृतीयराश्यभ्युपगमे कोऽपि दोषः स्यात् तदा स्यादयमपसिद्धान्तः, न चैतदस्ति । कुतः ? इत्याह– यदि नाम गृहकोकिलापुच्छादिजीवदेशो नोजीवो भवेत्– नोजीवत्वेनाभ्युपगम्येत, तर्हि को दोषः स्यात् ? न कमपि दोषमत्र पश्याम इत्यर्थः । ततः किमित्यपसिद्धान्तत्वदोषपरिहारार्थं पुनर्मां तत्र प्रेषयसि ? इति भावः ॥ २४५५-२४५६-२४५७-२४५८-२४५९ ॥ कस्माद् न दोषः ? इत्याह—

जं देसनिसेहपरो नोसद्दो जीवदव्वदेसो य। गिहकोइलाइपुच्छं विलक्खणं तेण नोजीवो ॥२४६०॥

( यद् देशनिषेधपरो नोशब्दो जीवद्रव्यदेशश्च । गृहकोकिलादिपुच्छं विलक्षणं तेन नोजीवः ॥ २४६० ॥ )

यद् यस्माद् 'नोजीवः' इत्यत्र नोशब्दो देशनिषेधपरो न तु सर्वनिषेधपरः, नोजीवो जीवैकदेशो न तु सर्वस्यापि जीवस्याभाव इत्यर्थः । भवत्वेवं देशनिषेधको नोशब्दः, परं गृहकोकिलादिपुच्छं जीवदेशो न भविष्यतीत्याशङ्क्याह– जीवद्रव्यैकदेशश्च गृहकोकिलादिपुच्छम्, आदिशब्दाच्छिन्नपुरुषादिहस्तादयः परिगृह्यन्ते । कथंभूतं तद् गृहकोकिलादि पुच्छम् ? इत्याह– विलक्षणं 'जीवा-ऽजीवेभ्यः' इति गम्यते, तथाहि– न तावद् गृहकोकिलादिपुच्छं जीवत्वेन व्यपदेष्टुं शक्यते, तत्कार्यैकदेशत्वेन तद्विलक्षणत्वात् । नाप्यजीव इत्यभिधातुं पार्यते, स्फुरणादिभिस्तेभ्योऽपि विलक्षणत्वात् । येनैवम्, तेन कारणेन पारिशेष्याद् नोजीव एव तदुच्यत इति ॥ २४६० ॥

सिद्धान्तेऽपि धर्मास्तिकायादिदेशवचनादुक्त एव नोजीवः । कथम् ? इत्याह—

धम्माइदसविहादेसओ य देसो वि जं पिहुं(प्र० पिह) वत्थुं। अपिहुब्भूओ किं पुण च्छिन्नं गिहकोलियापुच्छं? इच्छइ जीवपएसं नोजीवं जं च समभिरूढो वि। तेण त्थि तओ समए घडदेसो नोघडो जह वा ॥२४६२॥

( धर्मादिदशविधादेशतश्च देशोऽपि यत् पृथग् वस्तु । अपृथग्भूतः किं पुनश्छिन्नं गृहकोकिलापुच्छम् ? ॥ २४६१ ॥ )
( इच्छति जीवप्रदेशं नोजीवं यच्च समभिरूढोऽपि । तेनास्ति सकः समये घटदेशो नोघटो यथा वा ॥ २४६२ ॥ )

व्याख्या–चकारस्य भिन्नक्रमत्वाद् 'यद्' यस्मात् च कारणाद् देशोऽपीत्यपिशब्दस्यापि भिन्नक्रमत्वाद् धर्मास्तिकायादिदेशिनः 'अपिहुब्भूओ(प्र० अपिहब्भूओ)'त्ति अपृथग्भूतोऽप्येकत्वमापन्नोऽपि देशः 'पिह वत्थु त्ति' सिद्धान्ते पृथग् वस्तु 'भणितः' इति शेषः, पृथग्वस्तुत्वेन निर्दिष्ट इत्यर्थः । किं पुनश्छिन्नमात्मनः पृथग्भूतं कृतं तद् गृहकोकिलापुच्छं पृथग् वस्तु न भविष्यति ?– भविष्यत्येवेति । तच्च जीवाच्छिन्नत्वेन पृथग्भूतत्वात्, स्फुरणादिना चाजीवविलक्षणत्वात् सामर्थ्याद् नोजीव एवेति भावः । कुतः पुनर्वचनादेष सिद्धान्ते पृथग् वस्तु भणितः ? इत्याह–'धम्माइदसविहादेसओ त्ति' धर्मास्तिकायादीनाममूर्ताजीवानां दशविधादेशतो दशविधत्वभणनात् । एतदुक्तं भवति–अजीवद्रव्याणां दशविधत्वं परममुनिभिः–''अजीवा दुविहा पण्णत्ता, तं जहा– रूविअजीवा य, अरूविअजीवा य । रूविअजीवा चउव्विहा

'गृहकोकिलापुच्छं जीवैकदेश' इति पूर्वपक्षः

धर्मास्तिकायादिदेशस्य पृथग्वस्तुत्वं सिद्धान्तः प्रमाणितम्

पण्णत्ता, तं जहा– खंधा, देसा, पएसा, परमाणुपोग्गला । अरूविअजीवा दसविहा पण्णत्ता, तं जहा– धम्मत्थिकाए, धम्मत्थिकायस्स देसे, धम्मत्थिकायस्स पएसे, एवमधम्मत्थिकाए वि, आगासत्थिकाए वि, अद्धासमए" (०अजीवा द्विविधाः प्रज्ञप्ताः, तद्यथा– रूप्यजीवाश्च, अरूप्यजीवाश्च । रूप्यजीवाश्चतुर्विधाः प्रज्ञप्ताः, तद्यथा- स्कन्धाः, देशाः, प्रदेशाः, परमाणुपुद्गलाः । अरूप्यजीवा दशविधाः प्रज्ञप्ताः, तद्यथा– धर्मास्तिकायो धर्मास्तिकायस्य देशः, धर्मास्तिकायस्य प्रदेशः, एवमधर्मास्तिकायोऽपि, आकाशास्तिकायोऽपि अद्धासमयः ।) तदेवं धर्मास्तिकायादीनां दशविधत्वभणनेन तद्देशस्य पृथग्वस्तुत्वमुक्तमेव, अन्यथा दशविधत्वानुपपत्तेः । यदा च धर्मास्तिकायादीनां देशस्तेभ्योऽपृथग्भूतोऽपि पृथग् वस्तूच्यते, तदा गृहकोकिलापुच्छादिकं छिन्नत्वेन जीवात् पृथग्भूतं सुतरां वस्तु भवति । तच्च जीवा-ऽजीवविलक्षणत्वाद् नोजीव इत्युक्तमेवेति (ग्र०–२१०००) । अपिच, यद् यस्मात् कारणाज्जीवप्रदेशं नोजीवं समभिरूढनयोऽपीच्छति, तेन तस्मात् तकोऽसौ नोजीवः समये सिद्धान्तेऽप्यस्ति, न पुनर्मयैव कल्पनेनोच्यते, तथाचानुयोगद्वारेषु प्रमाणद्वारान्तर्गतं नयप्रमाणं विचारयता प्रोक्तम्– *"समभिरूढो सद्दनयं भणइ जइ कम्मधारएणं भणसि तो एवं भणाहि– जीवे य से, पएसे य से पएसे नोजीवे" (* समभिरूढः शब्दनयं भणति–यदि कर्मधारयेण भणसि तदा एवं भण– जीवश्च सः, प्रदेशश्च सः प्रदेशो नोजीवः ।) इति । तदनेन प्रदेशलक्षणो जीवैकदेशो नोजीव उक्तः, यथा घटैकदेशो नोघट इति । तस्मादस्ति नोजीवलक्षणस्तृतीयराशिः, युक्त्याऽऽगमसिद्धत्वात्, जीवा-ऽजीवादितत्त्ववदिति ॥ २४६१-२४६२ ॥

तदेवं परेणोक्ते आचार्यः प्रतिविधानमाह—

प्रतिविधाने स्थानाङ्गादिसूत्रप्रमाणित राशिद्वयम्

## जइ ते सुयं पमाणं तो रासी तेसु तेसु सुत्तेसु । दो जीवाजीवाणं न सुए नोजीवरासि त्ति॥ २४६३॥

( यदि ते श्रुतं प्रमाणं ततो राशी तेषु तेषु सूत्रेषु । द्वौ जीवा ऽजीवानां न श्रुते नोजीवराशिरिति ॥ २४६३ ॥ )

'धम्माइदसविहादेसओ य' इत्याद्युपन्यासात् सूत्रप्रामाण्यवादी किल लक्ष्यते भवान् । तद् यदि सत्यमेव तव सूत्रं प्रमाणम्, ततस्तर्हि तेषु तेषु सूत्रेषु जीवा ऽजीवरूपौ द्वावेव राशी प्रोक्तौ, तथा च स्थानाङ्गसूत्रम्– *' दुवे रासी पण्णत्ता, तं जहा– जीवा चेव अजीवा चेव ।" (*द्वौ राशी प्रज्ञप्तौ, तद्यथा– जीवाश्चैव, अजीवाश्चैव ।) तथा, अनुयोगद्वारसूत्रेऽप्युक्तम्– *"कइविहा णं भन्ते ! दव्वा पण्णत्ता । गोयमा ! दुविहा पण्णत्ता, तं जहा–जीवदव्वा य अजीवदव्वा य" (*कतिविधानि भगवन् ! द्रव्याणि प्रज्ञप्तानि ? । गौतम ! द्विविधे प्रज्ञप्ते, तद्यथा– जीवद्रव्य च अजीवद्रव्य च ।) तथा उत्तराध्ययनसूत्रे चाभिहितम्–"जीवा चेव अजीवा य एस लोए वियाहिए" इत्याद्यन्येष्वपि सूत्रेषु द्रष्टव्यम् । नोजीवराशिस्तु, तृतीयः श्रुते न क्वचिदप्यभिहितः, तत् कथं तत्तत्त्वप्ररूपणा न श्रुताशातना ? इति । न च धर्मास्तिकायादीनां देशस्तेभ्यो भिन्नः कोऽप्यस्ति, विवक्षामात्रेणैव तस्य भिन्नवस्तुत्वस्य कथनात् ॥ २४६३ ॥ एवं पुच्छादिकमपि गृहकोकिलादिजीवेभ्योऽभिन्नमेव, तत्संबद्धत्वात् अतो जीव एव तत्, न तु नोजीव इति दर्शयन्नाह—

हकोलियाइपुच्छे छिन्नेवि तदंतरालसंबंधो । सुत्तेऽभिहिओ सुहुमामुत्तत्तणओ तदग्गहणं ॥२४६४॥

( गृहकोकिलादिपुच्छे छिन्नेऽपि तदन्तरालसम्बन्धः । सूत्रेऽभिहितः सूक्ष्मामूर्तत्वतस्तदग्रहणम् ॥ २४६४ ॥ )

गृहकोकिलादीनां पुच्छादिकेऽवयवे क्षुरिकादिना छिन्नेऽपि तयोर्गृहकोकिला पुच्छादिवस्तुनोर्यदन्तरालं विचालं तत्र जीवप्रदेशानां सम्बन्धः संयोगस्तदन्तरालसम्बन्धः सूत्रेऽभिहित एव । तथा च भगवतीसूत्रम्— "अह भंते ! कुम्मा कुम्मावलिया, गोहा गोहावलिया, गोणे गोणावलिया, मणुस्से मणुस्सावलिया, महिसे महिसावलिया, एएसि णं दुहा वा, तिहा वा, असंखेज्जहा वा छिन्नाणं जे अंतरा ते वि णं तेहिं जीवपएसेहिं फुडा ? । हंता फुडा । पुरिसे णं भंते ! अन्तरे हत्थेण वा, पाएण वा, अंगुलियाए वा, कट्ठेण वा, किलिंचेण वा, आमुसमाणे वा, संमुसमाणे (प्र० संफुसमाणे) वा, आलिहमाणे वा, विलिहमाणे वा, अण्णयरेण वा तिक्खेणं सत्थजाएणं आच्छिदमाणे वा, विच्छिदमाणे वा अगणिकाएणं समोडहमाणे तेसिं जीवपएसाणं किंचि आबाहं वा विबाहं वा उप्पाएइ, छविच्छेयं वा करेइ ? । नो इणट्ठे समट्ठे । नो खलु तत्थ सत्थं संकमइ" (छाया— अथ भगवन् ! कूर्मः कूर्मावयवाः, गोधा गोधावयवाः, गौर्गोऽवयवाः, मनुष्यो मनुष्यावयवाः, महिषो महिषावयवाः, एतेषां द्विधा वा त्रिधा वाऽसंख्येयप्रकारेण वा छिन्नानां येऽन्तरालेऽपि तैर्जीवप्रदेशैः स्फुटाः । हन्त ! स्फुटाः ? । पुरुषो भगवन् ! अन्तर्हस्तेन वा, पादेन वा, अङ्गुल्या वा, काष्ठेन वा, किलिञ्चेन वाऽऽमृश्यमाणो वा, सम्मृश्यमाणो वा, आलिख्यमानो वा, विलिख्यमानो वा, अन्यतरेण वा तीक्ष्णेन शस्त्रजातेनाच्छिद्यमानो वा विच्छिद्यमानो वाऽग्निकायेन समुद्दह्यमानस्तेषां जीवप्रदेशानां काञ्चिदाबाधां वा विबाधां वोत्पादयति, छविच्छेदं वा करोति ? । नायमर्थः समर्थः, नो खलु तत्र शस्त्रं संक्रामति ।) इति । यदि नामैवं सूत्रे जीवप्रदेशानां तदन्तरालसम्बन्धोऽभिहितः, तर्हि तदन्तराले ते जीवप्रदेशाः किमिति नोपलभ्यन्ते ? इत्याह—'सुहुमेत्यादि' कार्मणशरीरस्य सूक्ष्मत्वात् जीवप्रदेशानां चामूर्तत्वादन्तराले तेषां जीवप्रदेशानां सतामप्यग्रहणं तदग्रहणमिति ॥ २४६४ ॥

ननु यथा देहे स्फुरणादिभिर्लिङ्गैर्जीवप्रदेशा गृह्यन्ते, तथा सन्तोऽप्यन्तराले किमिति ते न गृह्यन्ते ? इत्याह—

गज्झा मुत्तिगयाओ नागासे जह पईवरस्सीओ । तह जीवलक्खणाइं देहे न तदंतरालम्मि ॥२४६५॥

( ग्राह्या मूर्तिगता नाकाशे प्रदीपरश्मयः । तथा जीवलक्षणानि देहे न तदन्तराले ॥ २४६५ ॥ )

इह भू(कु)ड्य-करण्डका-ऽम्बरादीनि वस्तून्येव मूर्तियोगाद् मूर्तिरुच्यन्ते । ततश्च यथा मूर्तिगता यथोक्तमूर्तवस्तुगता एवाऽन्यर्थः, प्रदीपरश्मयो ग्राह्या भवन्ति, न तु केवले आकाशे प्रसृताः, तथा तेनैव प्रकारेण जीवो लक्ष्यते यैस्तानि जीवलक्षणानि भाषणो-च्छ्वास-निःश्वास-धावन-वल्गन स्फुरणादीनि देह एव गृह्यन्ते न तु तदन्तराल इति ॥ २४६५ ॥ यतश्चैवं ततः किम् ? इत्याह—

देहरहियं न गिण्हइ निरतिसओ नातिसुहुमदेहं व । न य से होइ विबाहा जीवस्स भवन्तराले व्व ॥२४६६॥

( देहरहितं न गृह्णाति निरतिशयो नातिसूक्ष्मदेहमिव । न च तस्य भवति विबाधा जीवस्य भवान्तराल इव ॥ २४६६ ॥ )

कायपुच्छ
न्तराले जीव
प्रदेशा
सूक्ष्मत्वाद
तीन्द्रियाः
शस्त्राछेद्याश्च

देहाभावे जीवलक्षणानामभावाद् देहरहित मुक्तात्मान छिन्नपुच्छाद्यन्तरालवर्तिन वा जीव निरतिशयः केवलज्ञानाद्यतिशयरहितो जन्तुर्न गृह्णाति । तथा, अतिसूक्ष्मो देहो यस्य तमतिसूक्ष्मदेह निगोदादिजीव कार्मणकाययोगिन वा जन्तु नासौ गृह्णाति । न च 'से' तस्य जीव- स्यान्तरालवर्तिषु प्रदेशेष्वनन्तरदर्शितसिद्धान्तप्रोक्तयुक्त्या कुन्ता-ऽसि-सेल्लादिशस्त्रैरग्नि-जलादिभिर्वा विबाधा पीडा काचिद् भवति, भवान्तराले कार्मणशरीरवर्तिजीवप्रदेशवदिति ॥२४६६॥ ननु गृहकोकिलादिजीवस्य छिन्नत्वात् पुच्छादिक खण्ड नष्टम्, ततश्च तत् तस्मात् पृथग्भूतत्वाद् नोजीव उच्यते, यथा घटाच्छिन्नत्वात् पृथग्भूत रथ्यापतित घटखण्ड घटैकदेशत्वाद् नोघटः ? । तदयुक्तम् । कुतः ? इत्याह—

दव्वामुत्तत्ताकयभावाढविकारदरिसणाओ य । अविणासकारणाहि य नभसो व्व न खंडसो नासो ।२४६७

अमूर्तत्वावि- कार्यत्वादि- तोऽन्तराल- प्रदेशा न पृथक्कृताः

( द्रव्यामूर्तत्वाऽकृतभावाऽविकारदर्शनाच्च । अविनाशकारणाच्च नभस इव न खण्डशो नाश ॥ २४६७ ॥ )

खण्डशो जीवस्य नाशो न भवतीति प्रतिज्ञा, अमूर्तद्रव्यत्वात्, अकृतकभावात्—अकृतकत्वादित्यर्थः, तथा, घटादेः कपालादिवद् विकारदर्शनाभावात्, अविनाशकारणत्वाच्च; विनाशकारणानामग्नि–शस्त्रादीनामभावाच्चेत्यर्थ इत्येते हेतव. । सर्वेषु 'नभस इव' इति दृष्टान्त इति २४६७ खण्डशो नाशे च जीवस्य दोषानाह—

नासे य सव्वनासो जीवस्स नासो य जिणमयच्चाओ। तत्तो य अणिमुक्खो दिक्खावेफल्लदोसा य॥२४६८॥

खण्डशो जीवनाशे दोषाः

( नाशे च सर्वनाशो जीवस्य नाशश्च जिनमतत्याग । ततश्चानिर्मोक्षो दीक्षावैफल्यदोषाश्च ॥ २४६८ ॥ )

शस्त्रच्छेदादिना जीवप्रदेशस्य नाशे चेष्यमाणे क्रमशः सर्वनाशोऽपि कदाचित् तस्य भवेत्, तथाहि—यत् खण्डशो नश्यति तस्य सर्वनाशो दृष्टः; यथा घटादेः, तथा च त्वयेष्यते जीवः, तत सर्वनाशस्तस्य प्राप्नोति । भवत्वेतदपि, कि नः क्षूयते ? इति चेत् । तदयुक्तम् इति ? इत्याह—'नासो ये'त्यादि स च जीवस्य सर्वनाशो न युक्त., यस्माज्जिनमतत्यागहेतुत्वाज्जिनमतत्यागोऽसौ । जिनमते हि जीवस्य गतः सर्वथा विनाशोऽन्तश सर्वथोत्पाद. सर्वत्र निषिद्ध एव, यदाह—*"जीवा ण भते ! कि वड्ढति हायति, अवट्ठिया ? । गोयमा ! नो वड्ढति, नो हायति, अवट्ठिया" (* जीवा भगवन् ! कि वर्धन्ते, हीयन्ते, अवस्थिताः ? । गौतम ! नो वर्धन्ते, नो हीयन्ते, अवस्थिताः ।) इत्यादि । अतो जीवस्य सर्वथा नाशेऽभ्युपगम्यमाने जिनमतत्याग एव स्यात् । तथा ततस्तत्सर्वनाशादनिर्मोक्षो मोक्षाभावः प्राप्नोति, मुमुक्षोः सर्वथा नाशात् । मोक्षाभावे च दीक्षादिकष्टानुष्ठानवैफल्यम्, क्रमेण च सर्वेषामपि जीवाना सर्वनाशे ससारस्य शून्यताप्राप्तिः, कृतस्य च शुभाशुभकर्मणो जीवस्य सर्वनाश एवमेव नाशात् कृतनाशप्रसङ्ग इत्यादि वाच्यमिति न जीवस्य खण्डशो नाशः । गृहकोकिलादीनां पुच्छादिखण्डस्य पृथग्भूतत्वेन प्रत्यक्षत एव नाशो दृश्यत इति चेत् । तदयुक्तम् । औदारिकशरीरस्यैव हि तत् खण्डमध्यक्षतो वीक्ष्यते, न तु जीवस्य तस्यामूर्तत्वेन केनापि खण्डयितुमशक्यत्वादिति ॥ २४६८ ॥ अथात्रैव पराभिप्रायमाशङ्क्य दूषयति—

**एवं पि रासओ ते न तिन्नि चत्तारि संपसज्जंति । जीवा तहा अजीवा नोजीवा नो अजीवा य ॥२४७३॥**

( एवमपि राशयस्ते न त्रयश्चत्वारः सम्प्रसजन्ति । जीवास्तथाऽजीवा नोजीवा नोअजीवाश्च ॥ २४७३ )

पुच्छाद्यवयवच्छेदेन च्छिन्नोऽपि भवतु गृहकोकिलादिजीवः, केवलं तस्य जीवस्य लक्षणानि स्फुरणादीनि यस्यामौ तल्लक्षणोऽपि मत्सर्गो पुच्छादिदेशः कथं केन हेतुना नोजीवो भण्यते ? । इदमुक्तं भवति–सम्पूर्णोऽपि गृहकोकिलादिजीवः स्फुरणादिलक्षणैरेव जीवो भण्यते, स्फुरणादीनि च लक्षणानि च्छिन्ने तदवयवेऽपि पुच्छादिके दृश्यन्ते, अतस्तल्लक्षणयुक्तोऽप्यसौ किमिति जीवो न भण्यते येन नोजीव-कल्पनाऽत्र विधीयते ? इति । 'अह एवमि'ति, अथैवं जीवलक्षणैः मद्भिरपि पुच्छादिकस्तदवयवो नोजीव एवेष्यते, न पुनः स्वाग्रहस्त्य-ज्यत इत्यर्थः । अत्र सूरिराह– 'तो' त्ति, ततस्तर्हि अजीवस्यापि घटादेर्देशो नोअजीवः प्राप्नोति, जीवैकदेशनोजीववदिति । अस्त्वेव न किञ्चिद् मम विनश्यतीति चेत् । नवम् । कुतः ? इत्याह– 'एव पीत्यादि' एवमप्यभ्युपगम्यमाने ये भवता त्रय एव राशय इष्यन्ते ते न घटन्ते, किन्तु चत्वारो राशयः प्रसजन्ति, तद्यथा– जीवाः, तथाऽजीवाः, नोजीवाः, नोअजीवाश्चेति ॥ २४७२–२४७३ ॥

अत्र यः परस्य परिहारस्तस्य स्वपक्षेऽपि समानतां दिदर्शयिषुः सूरिराह—



**अह ते अजीवदेसो अजीवसामण्णजाइ-लिङ्गो त्ति । भिन्नो वि अजीवो च्चिय, न जीवदेसो वि किं जीवो ?**

( अथ तेऽजीवदेशोऽजीवसामान्यजाति लिङ्ग इति । भिन्नोऽप्यजीव एव न जीवदेशोऽपि किं जीवः ? ॥ २४७४ ॥ )

अथ 'ते' तवाजीवस्य पुद्गलस्कन्धादेर्देश एकदेशो भिन्नोऽपि स्कन्धात् पृथग्भूतोऽप्यजीव एव न तु नोअजीवः । कुतः ? इत्याह– अजीवेन सामान्ये जाति-लिङ्गे यस्यासावजीवसामान्यजाति लिङ्ग इति कृत्वा । तत्राजीवत्वं जातिः, पुंलिङ्गलक्षणं च लिङ्गम् । एतच्च द्वयमप्य-जीव-तद्देशयोः सामान्यमेव, ततस्तद्देशोऽप्यजीव एव । हन्त ! यद्येवम्, तर्हि जीवदेशोऽपि किमिति जीवो नेष्यते, तस्यापि जीवेन समान-जाति लिङ्गत्वादिति ॥ २४७४ ॥ गाथाचतुर्थपादोक्तमेवार्थं प्रमाणेन दृढयन्नाह—

**छिन्नगिहकोलिया वि हु जीवो तल्लक्खणेहिं सयलो व्व । अह देसो त्ति न जीवो अजीवदेसो त्ति नोऽजीवे ।**

( छिन्नगृहकोकिलापि खलु जीवस्तल्लक्षणैः सकल इव । अथ देश इति न जीवोऽजीवदेश इति नोअजीवः ॥ २४७५ ॥ )

छिन्नगृहकोकिलापि– छिन्नः पुच्छादिको गृहकोकिलादिजीवावयवोऽपीत्यर्थः । किम् ? इत्याह–जीवः, इति प्रतिज्ञा । हेतुमाह— 'तल्लक्खणेहिं ति' तल्लक्षणैर्हेतुभूतैः– स्फुरणादितल्लक्षणयुक्तत्वादित्यर्थः । 'सयलो व्व त्ति' यथा सकलः परिपूर्णोऽच्छिन्नो गृहकोकिलादिजीवः, एष दृष्टान्तः । अथ गृहकोकिलादेर्जीवस्य पुच्छादिकस्तदवयवो देश एवेति कृत्वा न जीव इष्यते, सम्पूर्णस्यैव जीवत्वात् । यद्येवम्, तर्ह्यजीवस्यापि घटादेर्देशो नो नैवाजीवः प्राप्नोति, संपूर्णस्यैवाजीवत्वात् । ततोऽयमजीवदेशोऽपि नोअजीव एव स्यात्, न त्वजीवः । तथा च

तदेवमेते द्रव्यादयः षट् पदार्थाः षट्त्रिंशत्प्रभेदाः- नवानां द्रव्याणां, सप्तदशानां गुणानां, पञ्चानां कर्मणां, त्रयाणां सामान्यानाम्, विशेष-समवाययोश्च मीलने षट्त्रिंशद् विकल्पा भवन्तीत्यर्थः। एते च सर्वे प्रकृत्या, अकारेण, नोकारेण, उभयनिषेधतश्चेत्येतैश्चतुर्भिः प्रकारैर्गुणिताः सन्तो यच्चतुश्चत्वारिंशं शतं पृच्छानां भवति तत् पृष्टः कुत्रिकापणदेवः। इदमत्र हृदयम्- नञ्रहितं शुद्धं पदमिह प्रकृतिरुच्यते, तया शुद्धपदरूपया प्रकृत्या पृथिव्यादयः पदार्थाः पृच्छ्यन्ते, तद्यथा— 'पृथिवीं देहि' इत्यादि। तथा, लुप्तस्य नञः स्थाने योऽकारस्तेन चाकारेण संयुक्तया प्रकृत्या पृच्छा विधीयते, यथा 'अपृथिवीं देहि' इत्यादि। तथा नोकारेण संयुक्तया प्रकृत्या पृच्छा यथा- 'नोपृथ्वीं देहि' इत्यादि। तथा, नोकाराऽकारलक्षणं यदुभयं तेन योऽसौ प्रकृत्या निषेधस्तस्माच्च पृष्टः सुरो यथा- 'नोअपृथ्वीं देहि' इत्यादि। एवं जलादिष्वपि प्रत्येकमेते प्रकृत्य-ऽकार-नोकारो-भयनिषेधलक्षणाश्चत्वारः पृच्छाप्रकारा वक्तव्या इति। एतदभिप्रायवता प्रोक्तम्- 'सव्व गुणिआ' इति। आह- ननु 'पृथिवीं देहि' इत्यादिका याचना एव कथं पृच्छाः प्रोच्यन्ते ?। सत्यम्, किन्तु 'पृथिवीं देहि' इत्यादियाचनाद्वारेण पृथिव्यादिवस्तुसत्तां देवः पृच्छ्यते 'नोनीव याचितो यद्यसौ जीवा ऽजीवव्यतिरिक्तं तं दास्यति तदाऽयमस्ति, नान्यथा इत्येवमेव प्रतिज्ञातत्वात्। ततो याचना अप्येवास्तत्त्वतः पृच्छा एवेत्यदोषः ॥ २४९०-२४९१-२४९२-२४९३-२४९४ ॥

कथं पुनरेताः कुत्रिकापणसुरस्य पृच्छाः कृताः ? इत्याशङ्क्य दिङ्मात्रोपदर्शनार्थमाद्यं पृथिवीलक्षणं भेदमधिकृत्याह—

ढवि त्ति देइ लेट्ठुं देसो वि समाणजाइ-लिंगो त्ति। पुढवि त्ति सोऽपुढवीं देहि त्ति देइ तोयाइं॥२४९५

( पृथिवीति ददाति लेष्टुं देशोऽपि समानजाति लिङ्ग इति। पृथिवीति सोऽपृथिवीं देहीति ददाति तोयादि ॥ २४९५ ॥ )

पृथिवीं याचितः कुत्रिकापणसुरो लेष्टुं ददाति। आह—अप्रस्तुतमिदम्, अन्यस्मिन् याचितेऽन्यस्य प्रदानात्। नैवम्। कुतः ? इत्याह-'देसो वीत्यादि' देशोऽपि लेष्टुलक्षणः 'पुढवि त्ति' पृथिव्येव मन्तव्या, पृथिवीत्वलक्षणाया जातेः स्त्रीलिङ्गलक्षणस्य लिङ्गस्य च समानत्वात्। इह यत्र पृथिवीत्वजातिः स्त्रीलिङ्गं च वर्तते तत् 'पृथिवी' इति व्यवहर्तव्यम्, यथा रत्नप्रभादि, तथा च लेष्टुः, तस्मात् पृथिवीति। 'अपृथिवीं देहि' इत्येवं याचितोऽसौ देवस्तोयादि प्रयच्छति ॥ २४९५ ॥ नोपृथिवीं याचितस्तर्हि किं ददाति ? इत्याह—

देसपडिसेहपक्खे नोपुढवी देइ लेट्ठुदेसं सो। लेट्ठुदव्वावेक्खो कीरइ देसोवयारो से ॥ २४९६ ॥

इहरा(अ नइहा) पुढवि च्चिय सो लेट्ठु व्व समाणजाईलक्खणओ।
लेट्ठुदलं ति व देसो जइ तो लेट्ठु वि भूदेसो ॥ २४९७ ॥

( देशप्रतिषेधपक्षे नोपृथिवी ददाति लेष्टुदेशं स। लेष्टुद्रव्यापेक्षः क्रियते देशोपचारस्य ॥ २४९६ ॥)
( इतरथा पृथिव्येव स लेष्टुरिव समानजातिलक्षणतः। लेष्टुदलमिति वा देशो यदि ततो लेष्टुरपि भूदेशः ॥ २४९७ ॥ )

लेष्टुदेशोऽपि पृथ्वी एव। नोपृथ्वीयाचने लेष्टुप्रदानम्

नोशब्दस्य देशप्रतिषेधपक्षे नोपृथिवी याचितोऽनन्तरमेव समस्तपृथ्वीत्वेनोपचरितस्य लेष्टोरेव देश तत्खण्डरूपं ददात्यसौ देवः। आह– ननु देशनिषेधपक्षे नोपृथ्वी तद्देश एव गृह्यते, यस्तु लेष्टुदेश' स पृथ्वीदेशस्यापि देश एव, न तु पृथ्वीदेशः, तत् कथं नोपृथ्वीं याचितस्त ददाति ? इत्याह–'लेट्ठुदव्वेत्यादि' लेष्टुद्रव्यापेक्ष' 'से' तस्य लेष्टुदेशस्य देशोपचारः क्रियते। इदमुक्तं भवति–लेष्टौ तावदनन्तरोक्तयुक्तेः सपूर्णपृथ्वीद्रव्यत्वमारोपितम्, ततो लेष्टुलक्षणपृथ्वीद्रव्यापेक्षया तद्देशस्यापि पृथ्वीदेशत्वमुपचर्यते, इतरथाऽन्यथा पुनः परमार्थतो लेष्टुवत् समानजात्यादिलक्षणत्वादिति पूर्वोक्तहेतोः सोऽपि लेष्टुदेश' पृथ्व्येव मन्तव्या। अथ पराभिप्रायमाविष्कृत्य परिहारार्थमाह–'लेट्ठुदल त्ति न देसो जइ त्ति' यदि तु भो. पर! त्वं मन्यसे– योऽयं लेष्टोर्देश. स दल लेष्टोरेव खण्डमात्रम् ततः समानजातिलक्षणत्वेऽपि नासौ पृथ्वीति। अत्र परिहारमाह– 'तो लेट्ठू वि भूदेसो त्ति'। ततस्तर्हि 'पुढवी त्ति देइ लेट्ठुं देसो वि' (गा–२४९५)इत्यादौ यः पूर्वं लेष्टुः पृथ्वीत्वेनोक्तः सोऽपि पुनः पृथिव्या देश एव। ततस्त्वदभिप्रायेण सोऽपि पृथ्वीदलरूपत्वाद् न पृथ्वी, लेष्टुदेशवदिति ॥२४९६-२४९७॥

अस्त्वेवमिति चेत्। तदयुक्तम्। कुत ? इत्याह—

देहि भुवं तो भणिए सव्वाणेया न यावि सा सव्वा। सक्का सक्केण वि याणेउं किमुयावसेसेणं ? ॥२४९८॥

(देहि भुवं ततो भणिते सर्वानेया न चापि सा सर्वा। शक्या शक्रेणापि चानेतुं किमुतावशेषेण ? ॥ २४९८ ॥)

यदि लेष्टुर्न पृथ्वी, ततस्तर्हि 'भुवं देहि' इत्युक्ते सर्वापि संपूर्णा साऽऽनेया प्रसज्यते, न च सा सर्वा शक्रेणाप्यानेतुं शक्या, किमुतावशेषेण कृत्रिकापणदेवादिमात्रेण ? इति। तर्हि किमत्र तत्त्वम् ? इति भवन्त एव कथयन्तु ? इति ॥ २४९८ ॥

इत्थं प्रेरके उपगन्ते दृष्टान्तोपन्यासद्वारेण सूरिः प्रस्तुतार्थनिर्णयमाह—

जह घडमाणय भणिए न हि सव्वाणयणसंभवो किंतु। देसाइविसिट्ठं चिय तमत्थवसओ समप्पेइ ॥२४९९॥

पुढवि त्ति तहा भणिए तदेगदेसे वि पगरणवसाओ। लेट्ठुम्मि जायइ मई जहा तहा लेट्ठुदेसे वि ॥२५००॥

(यथा घटमानय भणिते न हि सर्वानयनसंभवः किन्तु। देशादिविशिष्टमेव समर्थवशतः समर्पयति ॥ २४९९ ॥)

(पृथिवीति तथा भणिते तदेकदेशेऽपि प्रकरणवशात्। लेष्टौ जायते मतिर्यथा तथा लेष्टुदेशेऽपि ॥ २५०० ॥)

यथा सामान्येन 'घटमानय' इत्युक्तेऽपि न खलु सर्वस्यापि घटस्य सामान्यतयैवानयनसंभवोऽस्ति, किन्तु सर्वस्यानेतुमशक्यत्वात् प्रायः सर्वेण प्रयोजनाभावाच्च अर्थवशात् सामर्थ्यत एव नियतदेशकालाद्यवच्छिन्नं विशिष्टमेव कञ्चिद् घटमानीय समर्पयति, तथाऽत्रापि 'पृथिवीं देहि' इति भणिते सर्वस्या आनेतुमशक्यत्वात्, प्रायस्तया प्रयोजनाभावाच्च यथा तदेकदेशेऽपि पृथिव्येकांशेऽपि लेष्टौ देवस्य समर्पणमतिर्जायते। कुत. ? इत्याह—प्रकरणवशात्, 'अनेनापि तदेकदेशेन लेष्टुना प्रस्तुतार्थः सेत्स्यति' इत्येवं प्रस्तावसवशादित्यर्थः। प्रकृतमाह–'तहा लेट्ठुदेसे

तदेवमेते द्रव्यादयः षट् पदार्थाः षट्त्रिंशत्प्रभेदाः– नवानां द्रव्याणां, सप्तदशानां गुणानां, पञ्चानां कर्मणां, त्रयाणां सामान्यानाम्, विशेष-समवाययोश्च मीलने षट्त्रिंशद् विकल्पा भवन्तीत्यर्थः । एते च सर्वे प्रकृत्या, अकारेण, नोकारेण, उभयनिषेधतश्चेत्येतैश्चतुर्भिः प्रकारैर्गुणिताः सन्तो यच्चतुश्चत्वारिंशं शतं पृच्छानां भवति तत् पृष्टः कुत्रिकापणदेवः । इदमत्र हृदयम्– नञ्रहितं शुद्धं पदमिह प्रकृतिरुच्यते, तया शुद्धपदरूपया प्रकृत्या पृथिव्यादयः पदार्थाः पृच्छ्यन्ते, तद्यथा— 'पृथिवीं देहि' इत्यादि । तथा, लुप्तस्य नञः स्थाने योऽकारस्तेन चाकारेण संयुक्तया प्रकृत्या पृच्छा विधीयते, यथा 'अपृथिवीं देहि' इत्यादि । तथा नोकारेण संयुक्तया प्रकृत्या पृच्छा यथा– 'नोपृथ्वीं देहि' इत्यादि । तथा, नोकाराऽकारलक्षणं यदुभयं तेन योऽसौ प्रकृत्या निषेधस्तस्माच्च पृष्टः सुरो यथा– 'नोअपृथ्वीं देहि' इत्यादि । एवं जलादिष्वपि प्रत्येकमेते प्रकृत्य-ऽकार-नोकारो-भयनिषेधलक्षणाश्चत्वारः पृच्छाप्रकारा वक्तव्या इति । एतदभिप्रायवता प्रोक्तम्– 'सव्वे गुणिआ' इति । आह– ननु 'पृथिवीं देहि' इत्यादिका याचना एव कथं पृच्छाः प्रोच्यन्ते ? । सत्यम्, किन्तु 'पृथिवीं देहि' इत्यादियाचनाद्वारेण पृथिव्याद्यस्तित्वमेवासौ देवः पृच्छ्यते 'नोजीवं याचितो यद्यसौ जीवा-ऽजीवव्यतिरिक्तं तं दास्यति तदाऽयमस्ति, नान्यथा इत्येवमेव प्रतिज्ञातत्वात् । ततो याचना अप्येतास्तत्त्वतः पृच्छा एवेत्यदोषः ॥ २४९०-२४९१-२४९२-२४९३-२४९४ ॥

कथं पुनरेताः कुत्रिकापणसुरस्य पृच्छाः कृताः ? इत्याशङ्क्य दिङ्मात्रोपदर्शनार्थमाद्यं पृथिवीलक्षणं भेदमधिकृत्याह—

पुढवि त्ति देइ लेट्ठुं देसो वि समाणजाइ-लिंगो त्ति। पुढवि त्ति सोऽपुढवी देहि त्ति देइ तोयाइं॥२४९५

( पृथिवीति ददाति लेष्टुं देशोऽपि समानजाति लिङ्ग इति । पृथिवीति सोऽपृथिवीं देहीति ददाति तोयादि ॥ २४९५ ॥)

पृथिवीं याचितः कुत्रिकापणसुरो लेष्टुं ददाति । आह—अप्रस्तुतमिदम्, अन्यस्मिन् याचितेऽन्यस्य प्रदानात् । नैवम् । कुतः ? इत्याह–'देसो वीत्यादि' देशोऽपि लेष्टुलक्षणः 'पुढवि त्ति' पृथिव्येव मन्तव्या, पृथिवीत्वलक्षणाया जातेः स्त्रीलिङ्गलक्षणस्य लिङ्गस्य च समानत्वात् । इह यत्र पृथिवीत्वजातिः स्त्रीलिङ्गं च वर्तते तत् 'पृथिवी' इति व्यवहर्तव्यम्, यथा रत्नप्रभादि, तथा च लेष्टुः, तस्मात् पृथिवीति । 'अपृथिवीं देहि' इत्येवं याचितोऽसौ देवस्तोयादि प्रयच्छति ॥ २४९५ ॥ नोपृथिवीं याचितस्तर्हि किं ददाति ? इत्याह—

देसपडिसेहपक्खे नोपुढवीं देइ लेट्ठुदेसं सो। लेट्ठुदव्वावेक्खो कीरइ देसोवयारो से ॥ २४९६ ॥

इहरा(अ अहवा) पुढवि च्चिय सो लेट्ठु व्व समाणजाईलक्खणओ ।
लेट्ठुदलं ति व देसो जइ तो लेट्ठु वि भूदेसो ॥ २४९७ ॥

( देशप्रतिषेधपक्षे नोपृथिवीं ददाति लेष्टुदेशं सः । लेष्टुद्रव्यापेक्षः क्रियते देशोपचारतस्तस्य ॥ २४९६ ॥)
( इतरथा पृथिव्येव स लेष्टुरिव समानजातिलक्षणतः । लेष्टुदलमिति वा देशो यदि ततो लेष्टुरपि भूदेशः ॥ २४९७ ॥ )

लेष्टुदेशोऽपि पृथ्वी एव । नोपृथ्वीयाचने लेष्टुप्रदानम्

नोशब्दस्य देशप्रतिषेधपक्षे नोपृथिवीं याचितोऽनन्तरमेव समस्तपृथ्वीत्वेनोपचरितस्य लेष्टोरेव देशं तत्खण्डरूपं ददात्यसौ देवः ।

आह– ननु देशनिषेधपक्षे नोपृथ्वी तद्देश एव गृह्यते, यस्तु लेष्टुदेशः स पृथ्वीदेशस्यापि देश एव, न तु पृथ्वीदेशः, तत् कथं नोपृथ्वीं याचितस्तं ददाति ? इत्याह–'लेट्ठुदव्वेत्यादि' लेष्टुद्रव्यापेक्ष' 'से' तस्य लेष्टुदेशस्य देशोपचारः क्रियते । इदमुक्तं भवति–लेष्टौ तावदनन्तरोक्तयुक्तेः संपूर्णपृथ्वीद्रव्यत्वमारोपितम्, ततो लेष्टुलक्षणपृथ्वीद्रव्यापेक्षया तद्देशस्यापि पृथ्वीदेशत्वमुपचर्यते, इतरथाऽन्यथा पुनः परमार्थतो लेष्टुवत् समानजात्यादिलक्षणत्वादिति पूर्वोक्तहेतोः सोऽपि लेष्टुदेशः पृथ्व्येव मन्तव्या । अथ पराभिप्रायमाविष्कृत्य परिहारार्थमाह–'लेट्ठुदल त्ति न देसो जइ त्ति' यदि तु भोः पर ! त्वं मन्यसे– योऽयं लेष्टोर्देशः स दलं लेष्टोरेव खण्डमात्रम् ततः समानजातिलक्षणत्वेऽपि नासौ पृथ्वीति । अत्र परिहारमाह– 'तो लेट्ठू वि भूदेसो त्ति' । ततस्तर्हि 'पुढवी त्ति देइ लेट्ठुं देसो वि' (गा–२४९५)इत्यादौ यः पूर्वं लेष्टुः पृथ्वीत्वेनोक्तः सोऽपि ध्रुवः पृथिव्या देश एव । ततस्त्वदभिप्रायेण सोऽपि पृथ्वीदलरूपत्वाद् न पृथ्वी, लेष्टुदेशवदिति ॥२४९६-२४९७॥

अस्त्वेवमिति चेत् । तदयुक्तम् । कुतः ? इत्याह—

देहि भुवं तो भणिए सव्वाणेया न यावि सा सव्वा । सक्का सक्केण वि याणेउं किमुयावसेसेणं ? ॥२४९८॥

( देहि भुवं ततो भणिते सर्वानेया न चापि सा सर्वा । शक्या शक्रेणापि चानेतुं किमुतावशेषेण ? ॥ २४९८ ॥ )

यदि लेष्टुर्न पृथ्वी, ततस्तर्हि 'भुवं देहि' इत्युक्ते सर्वापि सपूर्णा साऽऽनेया प्रसज्यते, न च सा सर्वा शक्रेणाप्यानेतुं शक्या, किमुतावशेषेण कृत्रिमापणदेवादिमात्रेण ? इति । तर्हि किमत्र तत्त्वम् ? इति भवन्त एव कथयन्तु ? इति ॥ २४९८ ॥

इत्थं प्रेरके उपरते दृष्टान्तोपन्यासद्वारेण सूरिः प्रस्तुतार्थनिर्णयमाह—

जह घडमाणय भणिए न हि सव्वाणयणसंभवो किंतु । देसाइविसिट्ठं चिय तमत्थवसओ समप्पेइ ।२४९९

पुढवि त्ति तहा भणिए तदेगदेसे वि पगरणवसाओ । लेट्ठुम्मि जायइ मई जहा तहा लेट्ठुदेसे वि ।२५००

( यथा घटमानय भणिते न हि सर्वानयनसंभवः किन्तु । देशादिविशिष्टमेव समर्थवशतः समर्पयति ॥ २४९९ ॥ )

( पृथिवीति तथा भणिते तदेकदेशेऽपि प्रकरणवशात् । लेष्टौ जायते मतिर्यथा तथा लेष्टुदेशेऽपि ॥ २५०० ॥ )

यथा सामान्येन 'घटमानय' इत्युक्तेऽपि न खलु सर्वस्यापि घटस्य सामान्यतयैवानयनसंभवोऽस्ति, किन्तु सर्वस्यानेतुमशक्यत्वात् प्रायः सर्वेण प्रयोजनाभावाच्च अर्थवशात् सामर्थ्यत एव नियतदेशकालाद्यवच्छिन्नं विशिष्टमेव कञ्चिद् घटमानीय समर्पयति, तथाऽत्रापि 'पृथिवीं देहि' इति भणिते सर्वस्या आनेतुमशक्यत्वात्, प्रायस्तया प्रयोजनाभावाच्च यथा तदेकदेशेऽपि पृथिव्येकांशेऽपि लेष्टौ देवस्य समर्पणमतिर्जायते । कुतः ? इत्याह—प्रकरणवशात्, 'अनेनापि तदेकदेशेन लेष्टुना प्रस्तुतार्थः सेत्स्यति' इत्येवं प्रस्तावसवशादित्यर्थः । प्रकृतमाह–'तहा लेट्ठुदेसे

वि त्ति' यथा 'पृथिवीं देहि' इत्युक्ते सति प्रतिपादितन्यायेन तदेकदेशेऽपि लेष्टौ समर्पणमतिर्जायते तथा तेनैव प्रकारेण 'नोपृथ्वीं देहि' इत्युक्ते तत्खण्डरूपे तदेकदेशेऽपि समर्पणबुद्धिरुत्पद्यत इति ॥ २४९९-२५०० ॥ आह— ननु 'इहरा पुढवि च्चिय सो लेट्ठु व्व समाणजाइलक्खणओ' इति (गा–२४९७) वचनाल्लेष्ट्वेकदेशः पूर्वं भवद्भिः पृथिवीत्वेनोक्तः स कथमिदानीं नोपृथिवी स्यात् ? इत्याशङ्क्याह—

लेट्ठुदव्वावेक्खाए तह वि तद्देसभावओ तम्मि। उवयारो नोपुढवि पुढवि च्चिय जाइलक्खणओ ॥२५०१॥

( लेष्टुद्रव्यापेक्षया तथापि तद्देशभावतस्तस्मिन्। उपचारो नोपृथिवी पृथिव्येव जातिलक्षणत ॥ २५०१ ॥ )

यद्यपि लेष्ट्वेकदेशः पृथिव्येव, तथापि 'उवयारो' त्ति तस्मिन् लेष्ट्वेकदेशे नोपृथिवीत्वस्योपचारः क्रियत इत्यर्थः। कया ? इत्याह— लेष्टुद्रव्यापेक्षया लेष्टोः प्रागुक्तन्यायेन यत् पृथिवीद्रव्यत्वमारोपितं तदपेक्षयेत्यर्थः। कुतः ? इत्याह— तद्देशभावतो लेष्टुद्रव्यैकदेशत्वादित्यर्थः। प्रागुक्तन्यायेन तावल्लेष्टुरेवेह पृथ्वीद्रव्यं तदपेक्षया च तदेकदेशे नोपृथ्वीत्युपचर्यत इति भावः। परमार्थतस्त्वयं लेष्ट्वेकदेशलक्षणा नोपृथ्वी पृथ्व्येव मन्तव्या समानजातिलक्षणत्वादिति को नेव न मन्यते, अस्माभिरेव प्रागुक्तत्वात्, इदानीमपि च स्मर्यमाणत्वात् ? इति ॥ २५०१ ॥

नोअकारोभयनिषेधपक्षमधिकृत्याह—

पडिसेहदुगं पगइं गमेइ जं तेण नोअपुढवि त्ति। भणिए पुढवि त्ति गई देसनिसेहे वि तद्देसो ॥२५०२॥

( प्रतिषेधद्विकं प्रकृतिं गमयति यत् तेन नोअपृथिवीति। भणिते पृथिवीति गतिर्देशनिषेधेऽपि तद्देश ॥ २५०२ ॥ )

"द्वौ नञौ प्रकृतमर्थं गमयतः" इति वचनाद् नोकाराकारलक्षणं प्रस्तुतप्रतिषेधद्वयं यस्मात् प्रकृतिं गमयति— प्रकृतमेवार्थं प्रतिपादयतीत्यर्थः, तेन कारणेन 'नोअपृथ्वी' इति भणिते नोशब्दस्य सर्वनिषेधपरत्वात् पृथिवीगतिर्भवति— पृथिव्याः प्रतिपत्तिर्भवतीत्यर्थः। 'देसनिसेहे वि तद्देसो' त्ति, देशनिषेधवाचके तु नोशब्दे तस्या जलादिरूपाया अपृथिव्या नोत्तरपदे श्रूयमाणाया देशस्तद्देशो गम्यते, देशनिषेधके नोशब्दे नोअपृथिवीति याचिते जलादिरूपापृथिव्येकदेशं देवो ददातीत्यर्थः ॥ २५०२ ॥ अथ प्रस्तुतार्थतात्पर्यमाह—

उवयाराओ तिविहं भुवमभुवं नोभुवं च सो देइ। निच्छयओ भुवमभुवं तह सावयवाइं सव्वाइं ॥२५०३॥

( उपचारात् त्रिविधं भुवमभुवं नोभुवं च स ददाति। निश्चयतो भुवमभुवं तथा सावयवानि सर्वाणि ॥ २५०३ ॥ )

स कुत्रिकापणदेवो याचितः सन् वस्तु ददाति। कतिविधम् ?, किं वा तत् ? इत्याह— त्रिविधं त्रिप्रकारम्, चतुर्थस्य नोअभूपक्षस्य प्रथमपक्ष एवान्तर्भावात्। तत्र भुवं लेष्टुम्, अभुवं जलादि, नोभुवं भूम्येकदेशं ददाति। कुतः ? इत्याह— उपचारात्— व्यवहारनयमताश्रयणादित्यर्थः, स एव हि देशदेशिव्यवहारं मन्यते, न तु निश्चय इति भावः। अत एवाह— 'निच्छयओ इत्यादि' निश्चयतस्तु भुवमभुवं चेत्येवं द्विविधमेव वस्तु ददाति, तृतीयस्य नोभूपक्षस्य देशदेशिव्यवहार एवोपपद्यमानत्वात्, तस्य च निश्चयनयेनानभ्युपगमादिति। तदेव 'भू-जल-

निश्चयनये देश देशि व्यवहारा- भावात् प्रकारद्वयम्

त्थ' इत्यादौ (गा-२४९०) पृथिव्या' प्रथम निर्दिष्टत्वात् तामधिकृत्योक्तम् । अथ शेषाणि जलादिवस्तून्यधिकृत्याह- 'तह सावयवाइ गन्नाइ' ति, न केवलमित्थं भुवं ददाति, तथा शेषाण्यपि जलादिवस्तूनि 'पगईए अगारेण' (गा-२४९४) इत्यादि प्रकारेण विशेष्य याचित मन् व्यवहारनयमतेन यथोक्तविधिना त्रिप्रकाराणि ददाति । कुत ? इति चेत् । उच्यते-यत सावयवानि सदेशान्येतानि सर्वाण्यपि जलादिवस्तूनि । अतस्तृतीयोऽपि देशविषयो दानप्रकार एतेषु सम्भवतीति भाव. । निश्चयनयमतेन तु देशदेशिव्यवहाराभावादेतान्यपि जलादीनि द्विप्रकाराण्येव ददातीति । तदेव सावयवे वस्तुनि प्रकारत्रयेण प्रकारद्वयेन च यथोक्तरीत्या दान सम्भवति ॥ २५०३ ॥

अथ निरवयवे वस्तुनि प्रकारद्वयेनैव दानसम्भव इति दर्शयन्नाह—

नोजीवत्वे-नोपलखण्डादिक, नोअजीवत्वेन शुकादिकं ददाति ।

जीवमजीवं दाउं नोजीवं जाइओ पुणरजीवं । देइ चरिमम्मि जीवं न उ नोजीवं स जीवदलं॥ २५०४॥

( जीवमजीवं दत्त्वा नोजीवं याचित पुनरजीवम् । ददाति चरमे जीवं न तु नोजीवं स जीवदलम् ॥ २५०४ ॥ )

'जीवं देहि' इति याचित' गुरो जीवं शुक-सारिकादिक दत्त्वा 'अजीवं देहि' इति याचितस्त्वजीवमुपलखण्डादिकं दत्त्वा कृतार्थो जायते । नोजीवं याचित. पुनरजीवमुपलखण्डादिकमेव ददाति, नोशब्दस्य सर्वनिषेधपरत्वात्, चरमे तु नोअजीवलक्षणे विकल्पे जीवमेव शुकादिकं ददाति, द्वयोर्नञो. प्रकृतार्थगमकत्वात् नोशब्दस्य च सर्वनिषेधकत्वादिति. न तु स कुत्रिकापणदेवो नोजीवं जीवदल जीवखण्डरूप क्वापि विकल्पे ददाति । इति जीवा ऽजीवलक्षणौ द्वावेव राशी, न तु तृतीयः, असत्त्वात्, खरविषाणवदिति ॥ २५०४ ॥ तत. किमभूत् ? इत्याह—

तो निग्गहिओ छलुओ गुरू वि सक्कारमुत्तम पत्तो । धिद्धिक्कारोवहओ छलुओ वि सभाहिं निच्छूढो ।२५०५

( ततो निगृहीत षडुलूको गुरुरपि सत्कारमुत्तमं प्राप्त । धिग्धिक्कारोपहत षडुलूकोऽपि सभातो निष्कासित ॥ २५०५ )

ततो यदा कुत्रिकापणसुरेण जीवव्यतिरिक्तो नोजीवो न दत्त., असत्त्वात्, तदा निगृहीतो निर्जितः षडुलूकः । गुरुरपि श्रीगुप्ताचार्यो राजादिलोकात् सत्कारमुत्तम प्राप्त' । षडुलूकोऽपि गुरुप्रत्यनीकत्वाज्जनप्रयुक्तधिक्कारोपहतो राजसभातो निष्कासित (प्र०. ०पहतो निष्कासितः) इति ॥ २५०५ ॥ तत. किम् ? इत्याह—

रोहगुप्त-प्रणीत वैशेषिक-मतम्

वाए पराजिओ सो निव्विसओ कारिओ नरिंदेण । घोसावियं च नयरे जयइ जिणो वद्धमाणो त्ति ॥२५०६॥

सेणाभिनिवेसाओ समइविगप्पियछ्पयत्थमादाय । वइसेसियं पणीयं फाईकयमण्णमण्णेहिं ॥ २५०७॥

( वादे पराजित स निर्विषय कारितो नरेन्द्रेण । घोषितं च नगरे जयति जिनो वर्धमान इति ॥ २५०६ ॥ )

( तेनाभिनिवेशात् स्वमतिविकल्पितपदार्थमादाय । वैशेषिक प्रणीतं स्फातीकृतमन्यान्यै ॥ २५०७ ॥ )

स रोहगुप्तो गुरुणा वादे पराजितः सन् नृपतिना निर्विषय. समादिष्टः, पटहकेन च वाद्यमानेन घोषापितं समस्तनगरे 'जयति

कषायाणां यदन्तरङ्गमविरत्या ऽऽस्रवादिकं बन्धकारणं मोऽन्तरङ्गकषायकारणरूपः प्रत्ययकषायो भवति । अन्ये तु केचिद् बहिरङ्ग

एव शब्द रूपादिविषयग्रामः प्रत्ययकषाय इति व्याचक्षते । तच्चायुक्तम्, यत उत्पत्तिकषायान्नासौ भिद्यते, द्रव्यादेरिव तस्मादपि बहिरङ्गात्

कषायोत्पत्तेरिति ॥ २९८३ ॥ आदेशकषायमाह—

आदेश-कषायः

आएसओ कसाओ कइयवकयभिउडिभंगुरागारो । केई चित्ताइगओ ठवणाणत्थंतरो सोऽयं ॥२९८४

( आदेशतः कषायः कैतवकृतभृकुटिभङ्गुराकारः । केचिच्चित्रादिगतः स्थापनानर्थान्तरः सोऽयम् ॥ २९८४ ॥ )

योऽन्तरङ्गकषायमन्तरेणापि 'कुपितोऽयम्' इत्यादिरूपेणादिश्यते स आदेशकषायः । स चेह कैतवकृतभृकुटिभङ्गुराकारो नटादिर्द्र-

व्यः । केचित् 'तद्रूपधरश्चित्रादिगतो जीव आदेशकषाय.' इति व्याचक्षते । तच्चायुक्तम्, स्थापनानर्थान्तरत्वात् तस्येति ॥ २९८४ ॥

रस-भाव-कषायौ

रस भावकषायावाह—

सओ रसो कसाओ कसायकम्मोदओ य भावम्मि । सो कोहाइ चउद्धा नामाइ चउविहेक्केक्को २९८५

( रसतो रसः कषायः कषायकर्मोदयश्च भावे । स क्रोधादिश्चतुर्धा नामादिश्चतुर्विध एकैकः ॥ २९८५ ॥ )

हरीतक्यादीनां यो रसः स रसतः कषायो रसकषायः । भावकषायस्तु मोहनीयकर्मोदयः, तज्जनितश्च कषायपरिणामः । स च क्रोधा-

दिभेदाच्चतुर्धा । क्रोधादिरपि प्रत्येकं नामादिभेदाच्चतुर्विध इति ॥ २९८५ ॥ अथ नामादिकषायाणां को नयः कमिच्छति ? इत्याह—

कषायनिक्षेपाणां को नयः कमिच्छति ?

भावं सद्दाइनया अट्ठविहमसुद्धनेगमाईया । नाएसुप्पत्तीओ सेसा जं पच्चयविगप्पा ॥ २९८६ ॥

( भावं शब्दादिनया अष्टविधमशुद्धनैगमादिकाः । नादेशोत्पत्ती शेषा यत् प्रत्ययविकल्पौ ॥ २९८६ ॥ )

भावकषायमेव शुद्धत्वात् शब्दनया इच्छन्ति, न नामादिकषायान् । शेषास्तु ऋजुसूत्रवर्जा नैगमादिनयाः द्विधा— शुद्धा अशुद्धाश्च ।

तत्राविशुद्धा अष्टविधमपि नामादिकषायमिच्छन्ति । ये तु विशुद्धाः, तथा ऋजुसूत्रनयश्चैते सर्वेऽप्यादेशो-त्पत्तिकषायौ नेच्छन्ति । कुतः ?

इत्याह— 'जं पच्चयविगप्प' त्ति, यद् यस्मादेतौ द्वावपि प्रत्ययकषायविकल्पौ प्रत्ययकषायाद् न भिद्येते; तथाहि— उत्पत्तिकषायः कषायोत्पत्तौ

प्रत्यय इत्युक्तमेव, तथा, आदेशकषायोऽपि कैतवकृतोऽप्यन्यकषायोत्पत्तौ प्रत्ययो भवत्येवेति न तस्मात् तौ भिन्नाविति ॥ २९८६ ॥

अथ नामादिके द्रव्यक्रोधे ज्ञशरीर भव्यशरीरव्यतिरिक्तं द्रव्यक्रोधमाह—

दुविहो व दव्वकोहो कम्मदव्वे य नोयकम्मम्मि । कम्मदव्वे कोहो तज्जोग्गा पोग्गला णुइया ॥२९८७॥

( द्विविधो वा द्रव्यक्रोधः कर्मद्रव्ये च नोकर्मद्रव्ये । कर्मद्रव्ये क्रोधस्तद्योग्याः पुद्गला अनुदिताः ॥ २९८७ ॥ )

नोकम्मदव्वकोहो नेओ चम्मारनीलिकोहाई । जं कोहवेयणिज्जं समुइण्णं भावकोहो सो ॥२९८८॥

( नोकर्मद्रव्यक्रोधो ज्ञेयश्चर्मकार नीलीकोथादि । यत् क्रोधवेदनीयं समुदीर्णं भावक्रोध स ॥ २९८८ ॥ )

व्याख्या– न भव्यशरीरव्यतिरिक्तः द्रव्यक्रोधो द्विधा– कर्मद्रव्यक्रोधः, नोकर्मद्रव्यक्रोधश्च । तत्र योग्यादयोऽनुदिताश्चतुर्विधाः पुद्गलाः कर्मद्रव्यक्रोधः । नोकर्मद्रव्यक्रोधस्तु 'कोहो' त्ति, प्राकृतशब्दमाश्रित्य चर्मकारचर्मकोथो नीली(प्र० . ०ल)कोथादिश्च ज्ञेयः । भावक्रोधमाह– यत् क्रोधवेदनीयं कर्मविपाकत' समुदीर्णमुदयमागत तज्जनितश्च क्रोधपरिणामः स भावक्रोध इति । एवं मानादयोऽपि नामादिभेदाद् यथायोगं चतुर्विधा मन्तव्याः ॥ २९८७-२९८८ ॥ अथवा, पृथगनन्तानुबन्ध्यादिभेदात् सर्वेऽपि क्रोधादयश्चतुर्विधा ज्ञेया इति दर्शयन्नाह—

माणादओ वि एवं नामाइ चउव्विहा जहाजोग्गं । नेया पिहप्पिहा वा सव्वेऽणंताणुबन्धाई २९८९

( मानादयोऽप्येवं नामादयश्चतुर्विधा यथायोग्यम् । ज्ञेया पृथक् पृथग् वा सर्वेऽनन्तानुबन्ध्यादय ॥ २९८९ ॥ )

गतार्था ॥ २९८९ ॥ तत्रानन्तानुबन्ध्य-ऽप्रत्याख्यानावरण(प्र० . अप्रत्याख्यान)प्रत्याख्यानावरण-सज्वलनस्वरूपाणा क्रोधादीना यथानुपूर्व्या प्रत्येकं स्वरूपमाह–

जल-रेणु-भूमि-पव्वयराईसरिसो चउव्विहो कोहो । तिणिसलया-कट्ठ-ट्ठियसेलत्थंभोवमो माणो ।२९९०।

मायावलेहि-गोमुत्ति-मेंढसिंग-घणवंसिमूलसमा । लोहो हलिद्द-खंजण-कद्दम-किमिरागसामाणो ।२९९१।

पक्ख-चउम्मास-वच्छर-जावज्जीवाणुगामिणो कमसो । देव-नर-तिरिय-नारयगइसाहणहेयवो नेया

( जल-रेणु भूमि पर्वतराजि (रेखा) सदृशश्चतुर्विध क्रोध । तिनिसलता-काष्ठा ऽस्थिक शैलस्तम्भोपमो मान ॥ २९९० ॥ )

( मायावलेखिका-गोमूत्रिका-मेषशृङ्ग-घनवंशीमूलसमा । लोभो हरिद्रा-खञ्जन-कर्दम-कृमिराग-सामान ॥ २९९१ ॥ )

( पक्ष चतुर्मास वत्सर यावज्जीवानुगामिन क्रमश । देव नर तिर्यग्-नारकगतिसाधनहेतवो ज्ञेया ॥ २९९२ ॥ )

गाथाः स्थानान्तरेऽतिप्रतीतार्थत्वाद् नेह व्याख्यायन्त इति ॥ उक्त कषायस्वरूपम् ॥२९९०-२९९१ २९९२॥ अथेन्द्रियस्वरूप निरूपयन्नाह-

इंदो जीवो सव्वोवलद्धिभोगपरमेसरत्तणओ । सोत्ताइभेयमिंदियमिह तल्लिंगाइभावाओ ॥२९९३॥ इन्द्रिय-व्युत्पत्तिः

( इन्द्रो जीव सर्वोपलब्धिभोगपरमेश्वरत्वात । श्रोत्रादिभेदमिन्द्रियमिह तल्लिङ्गादिभावात ॥ २९९३ ॥ )

'इदि परमैश्वर्ये' इन्दनात् परमैश्वर्ययोगादिन्द्रो जीव', परमैश्वर्यमस्य कुत' ? इत्याह–'सव्वो' इत्यादि आवरणाभावे सर्वस्यापि वस्तुन उपलम्भात्, नानाभवेषु सर्वस्यापि त्रिजगद्गतस्य वस्तुनः परिभोगाच्च परमेश्वरो जीव इति तस्य परमैश्वर्यम् । तस्येन्द्रस्य जीवस्य लिङ्ग चिह्नं तेन दृष्टं सृष्टं वा निशानादिरिन्द्रियमुच्यते, अत एवाह–इन्द्रियमिह तल्लिङ्गादिभावादिति । तच्च श्रोत्रादिभेदं श्रोत्र-नयन घ्राण रसन-

स्पर्शनभेदात् पञ्चविधमित्यर्थः ॥ २९९३ ॥ तदपि नामादिभेदाच्चतुर्विधमिति दर्शयन्नाह—

तं नामाइ चउद्धा दव्वं निव्वित्ति उवगरणं च । आगारो निव्वित्ति चित्ता बज्झा इमा अंतो ॥२९९४॥
पुप्फं कलंवुयाए-धन्नमसूराइमुत्तचंदो य । होइ खुरप्पो नाणागिई य सोइंदियाईणं ॥ २९९५ ॥
विसयग्गहणसमत्थं उवगरणं इंदियंतरं तंपि । जं नेह तदुवघाए गिण्हइ निव्वत्तिभावे वि ॥२९९६॥

( तद् नामादि चतुर्धा द्रव्य निर्वृत्तिरुपकरण च । आकारो निर्वृत्तिश्चित्रा बाह्येयमन्त ॥ २९९४ ॥ )
( कदम्बपुष्पाकारो धान्यमसूरातिमुक्तचन्द्रश्च । भवति क्षुरप्रो नानाकृतिश्च श्रोत्रेन्द्रियादीनाम् ॥ २९९५ )
( विषयग्रहणसमर्थमुपकरणमिन्द्रियान्तरं तदपि । यद् नेह तदुपघाते गृह्णाति निर्वृत्तिभावेऽपि ॥ २९९६ ॥ )

व्याख्या–तद् नामेन्द्रियं स्थापनेन्द्रियमित्यादिभेदाच्चतुर्धा । तत्र ज्ञ भव्यशरीरव्यतिरिक्तं द्रव्यं द्रव्येन्द्रियं निर्वृत्तिरुपकरणं चेति द्विभेदम् । तत्र कर्णशष्कुलिकादिराकारो निर्वृत्तिरुच्यते । सापि बाह्या-ऽऽन्तरभेदात् पुनरपि द्विभेदा । तत्र बाह्या निर्वृत्तिश्चित्रा नानाप्रकारा मनुष्याऽ-श्व शशकादेः कस्यापि कीदृक्स्वरूपेत्यर्थः । अन्तर्निर्वृत्तिस्त्वियम् ; का ? इत्याह–'पुप्फमि'त्यादि, श्रोत्रस्यान्तर्निर्वृत्तिः कदम्ब-पुष्पाकारमांसगोलकरूपा द्रष्टव्या, चक्षुषस्तु धान्यमसूराकारा, घ्राणस्यातिमुक्तककुसुमचन्द्रकाकारा, रसनस्य क्षुरप्राकारा, स्पर्शनं तु नाना-कृति द्रष्टव्यमिति । एष श्रोत्रादीनां तन्निर्वृत्तेराकार इति । तस्या एव कदम्बपुष्पाकृतिमांसगोलकरूपायाः श्रोत्राद्यन्तर्निर्वृत्तेर्यद्विषयग्रहण-समर्थं शक्तिरूपमुपकरणं तदुपकरणं द्रव्येन्द्रियम् 'उच्यते' इति शेषः, यथा खड्गस्य च्छेत्त्री शक्तिः, वह्नेर्वा दाहादिका शक्तिस्तथेदमपि श्रोत्राद्यन्तर्निर्वृत्तेर्विषयग्रहणसमर्थशक्तिरूपं द्रष्टव्यम् । तर्ह्यन्तर्निर्वृत्तिरेव तत्, तच्छक्तिरूपत्वात्, न पुनर्भेदान्तरमित्याशङ्क्याह–तदपीन्द्रिया-न्तरं द्रव्येन्द्रियस्य भेदान्तरमित्यर्थ. । कुतः ? इत्याह–'जमि'त्यादि, यस्मादिह कदम्बपुष्पाद्याकृतेर्मांसगोलकाकारायाः श्रोत्राद्यन्तर्निर्वृत्तेर्या शब्दादिविषयपरिच्छेत्त्री शक्तिस्तस्या वातपित्तादिनोपघाते विनाशे सति यथोक्तान्तर्निर्वृत्तिसद्भावेऽपि न शब्दादिविषयं गृह्णाति जीवः, इत्यतो ज्ञायते– अस्त्यन्तर्निर्वृत्तिशक्तिरूपमुपकरणेन्द्रियं द्रव्येन्द्रियस्य द्वितीयो भेद इति ॥ २९९४–२९९५–२९९६ ॥ भावेन्द्रियमाह—

लद्धु-वओगा भाविंदियं तु लद्धि त्ति जो खओवसमो । होइ तदावरणाणं तल्लाभे चेव सेसंपि ॥२९९७॥

( लब्ध्यु-पयोगौ भावेन्द्रियं तु लब्धिरिति यः क्षयोपशमः । भवति तदावरणानां तल्लाभ एव शेषमपि ॥ २९९७ ॥ )

लब्ध्यु पयोगौ भावेन्द्रियम् । तत्र यदावरणानां तेषामिन्द्रियाणामावारककर्मणां क्षयोपशमो भवति जीवस्य स लब्धिः । शेषमपि द्रव्ये-न्द्रियं तल्लाभ एव लब्धिप्राप्तावेव भवतीति द्रष्टव्यमिति ॥ २९९७ ॥ उपयोगः कः ? इत्याह—

जो सविसयवावारो सो उवओगो स चेगकालम्मि। एगेण चेय तम्हा उवओगेगिंदिओ सव्वो॥२९९८॥

(य स्वविषयव्यापारः स उपयोगः स चैककाले। एकेनैव तस्मादुपयोगैकेन्द्रियः सर्वः॥२९९८॥)

यः श्रोत्रादीन्द्रियस्य स्वविषये शब्दादौ परिच्छेदो व्यापारः स उपयोगः। स चैकस्मिन् काले देवादीनामप्येकेनैव श्रोत्राद्यन्यतरेणेन्द्रियेण भवति, न तु द्व्यादिभिः। तस्मादुपयोगमाश्रित्य सर्वोऽपि जीव एकेन्द्रिय एव, एकस्मिन् काले देवादीनामप्येकस्यैव श्रोत्राद्यन्यतरेन्द्रियोपयोगस्य सद्भावादिति॥२९९८॥

यद्युपयोगतः सर्वोऽपि जीव एकेन्द्रियः, तर्हि एकेन्द्रियो द्वीन्द्रिय इत्यादिभेदः कथमागमे निर्दिष्टः? इत्याह—

जीवभेदा निवृत्त्यादिकमाश्रित्य

एगिंदियाइभेया पडुच्च सेसिंदियाइ जीवाणं। अहवा पडुच्च लद्धिंदियं पि पंचेंदिया सव्वे॥२९९९॥

(एकेन्द्रियादिभेदाः प्रतीत्य शेषेन्द्रियाणि जीवानाम्। अथवा प्रतीत्य लब्धीन्द्रियमपि पञ्चेन्द्रियाः सर्वे॥२९९९॥)

यो जीवानामेकेन्द्रियादयो भेदाः शेषाणि निर्वृत्त्युपकरण-लब्धीन्द्रियाणि प्रतीत्य द्रष्टव्याः। तानि यस्य यावन्ति तावद्भिर्व्यपदेश इति, न तूपयोगतः। अथवा, लब्धीन्द्रियमप्याश्रित्य वक्ष्यमाणयुक्तितः सर्वे पृथिव्यादयोऽपि जीवाः पञ्चेन्द्रिया एवेति॥२९९९॥

कुतः सर्वे पञ्चेन्द्रियाः? इत्याह—

नकुलादीनामपि पञ्चेन्द्रियलब्धिः

जं किर बउलाईणं दीसइ सेसेंदिओवलंभो वि। तेण त्थि तदावरणक्खओवसमसंभवो तेसिं॥३०००॥

(यत् किल बकुलादीनां दृश्यते शेषेन्द्रियोपलम्भोऽपि। तेनास्ति तदावरणक्षयोपशमसंभवस्तेषाम्॥३०००॥)

यस्मात् किल बकुल-चम्पक-तिलक-विरहकादीनां वनस्पतिविशेषाणां स्पर्शनात् शेषाणि यानि रसन-घ्राण-चक्षुः-श्रोत्रलक्षणानीन्द्रियाणि तत्संबन्ध्युपलम्भो दृश्यते, तेन ज्ञायते—तेषामपि बकुलादीनां तदावरणक्षयोपशमसंभवो रसनादीन्द्रियावारककर्मक्षयोपशमस्य या च यावती मात्राऽस्तीति। अन्यथा हि बकुलस्य शृङ्गारितकामिनीवदनार्पितचारुमदिरागण्डूषेण, चम्पकस्यातिसुरभिगन्धोदकसेकेन, तिलकस्य कामिनीकटाक्षविक्षेपेण, विरहकस्य पञ्चमोद्गारश्रवणेन पुष्पपल्लवादिसंभवो न घटते॥३०००॥ अत्र प्रयोगमाह—

पंचेंदिउ व्व बउलो नरो व्व सव्वविसओवलंभाओ। तहवि न भण्णइ पंचेंदिउ त्ति बज्झेंदियाभावा॥

(पञ्चेन्द्रिय इव बकुलो नर इव सर्वविषयोपलम्भात्। तथापि न भण्यते पञ्चेन्द्रिय इति बाह्येन्द्रियाभावात्॥३००१॥)

पञ्चेन्द्रिय इव बकुल इति प्रतिज्ञा। सर्वेषामपि शब्द-रूपादिविषयाणामुपलम्भादिति हेतुः। नरवदिति दृष्टान्तः। ननु बकुलस्य स्पर्शनेन्द्रियोपलम्भ एव युक्तः, तत् कथमस्य सर्वविषयोपलम्भसंभव इति? सत्यम्, मुख्यस्तावत् स एव संभवति, गौणवृत्त्या तु शेषेन्द्रियविषयोपलम्भोऽप्यस्य समाप्यते, शृङ्गारितकामिनीमदिरागण्डूषास्वादनात्, तस्याश्च तनुलताविमर्शसरस-चन्दनादिगन्धशोभाकल्प मधुरे-

ह्रापलक्षणाना पञ्चानामपीन्द्रियनिष्पत्ताणा सम्भवादिति । अन्यथा वा पञ्चेन्द्रियत्वमस्य सुधिया भावनीयम् तदेकेन्द्रियो नकुलः कथ प्रसिद्धः

पञ्चेन्द्रियोऽपि कस्माद् नोपदिश्यते ? इत्याह– तथापि पञ्चेन्द्रियोऽसौ न भण्यते, बाह्याना निर्वृत्त्यादिद्रव्येन्द्रियाणामभावादिति ॥३००१॥

अमुमेवार्थ कुम्भकारव्यपदेशदृष्टान्तेन समर्थयन्नाह—

**सुत्तो वि कुंभनिव्वत्तिसत्तिजुत्तो त्ति जह स घडकारो। लद्धिंदिएण पंचेंदिओ तहा वज्झरहिओ वि ॥३००२**

( सुप्तोऽपि कुम्भनिर्वृत्तिशक्तियुक्त इति यथा स घटकार । लब्धीन्द्रियेण पञ्चेन्द्रियस्तथा बाह्यरहितोऽपि ॥ ३००२ ॥ )

सुबोधा ॥ ३००२ ॥ अथेन्द्रियाणा लाभक्रम उच्यते । तत्र यदा द्रव्येन्द्रियसामान्य भावेन्द्रियसामान्य चाश्रित्य पृच्छ्यते तदा 'तल्लाभे

चेव सेस पि'(गा०–२९९७) इति प्रागुक्तवचनाल्लब्धिमाश्रित्य प्रथम भावेन्द्रियलाभस्ततो द्रव्येन्द्रियलाभ इति द्रष्टव्यम् । यदा तु द्रव्येन्द्रिय-

भावेन्द्रियसामान्याद् भिन्नः कुतो लाभः पृच्छ्यते– विशेषरूपतया पृच्छ्यत इत्यर्थः, तदेत्थ द्रष्टव्यम्– प्रथममिन्द्रियावरणक्षयोपशमरूपा

लब्धिर्भवति, ततो बाह्यान्तरभेदभिन्ना निर्वृत्तिः, ततश्चान्तरनिर्वृत्तेः शक्तिरूपमुपकरणम्, तदनन्तर चेन्द्रियार्थोपयोग इति एतदेवाह—

**लाभक्कमे उ लद्धी निव्वत्तु-वगरण उवओगो य । दव्विंदिय-भाविंदियसामण्णाओ कओ भिण्णो ॥३००३**

( लाभक्रमे तु लब्धिर्निर्वृत्त्यु पकरणे उपयोगश्च । द्रव्येन्द्रिय-भावेन्द्रियसामान्यात् कुतो भिन्न ॥ ३००३ ॥ )

व्याख्यातार्था ॥ तदेव व्याख्यातमिन्द्रियस्वरूपम् ॥ ३००३ ॥ अथ परीषहान् व्याचिख्यासुराह—



**परिसोढव्वा जइणा मग्गाविच्चुइ-विणिज्जराहेऊ। जुत्ता परीसहा ते खुहादओ होंति बावीसं॥ ३००४**

( परिषोढव्या यतिना मार्गाविच्युतिविनिर्जराहेतो । युक्ता परीषहास्ते क्षुदादयो भवन्ति द्वाविंशति ॥ ३००४ ॥ )

यतो मार्गाविच्युति विनिर्जराहेतोः परिषोढव्या अधिसहनीयाः साधुभि., ततः परीषहा भण्यन्ते । ते च *खुहा पिवासा सीउण्हं'

इत्यादिग्रन्थप्रतिपादिताः क्षुदादयो द्वाविंशतिर्भवन्तीति ॥ ३००४ ॥ अथोपसर्गान् व्याख्यातुमाह—



**उवसज्जणमुवसग्गो तेण तओ व उवसज्जए जम्हा। सो दिव्व-मणुय-तेरिच्छिया-ऽऽयसंवेयणाभेओ॥**

( उपसर्जनमुपसर्गस्तेन सको वोपसृज्यते यस्मात् । स दिव्य-मानुष तैर्यग्योन्या-ऽऽत्मसवेदनाभेद ॥ ३००५ ॥ )

उपसर्जनमुपसर्गः अथवा, करणसाधनः– उपसृज्यते सबध्यते पीडादिभिः सह जीवस्तेनेत्युपसर्गः । अथवा, कर्मसाधनः– उपसृज्यते

---

* खुहा पिवासा-सी उण्ह, दसा चेलारईत्थिओ। चरिया निसीहिया सिज्जा अक्कोस-वह-जायणा ॥ १ ॥ अलाभ-रोग-तणफासा-मल-सक्कारपरीसहा । पन्ना-अन्नाण-सम्मत्तं इअ बावीस परीसहा ॥ २ ॥ (क्षुत् पिपासा शीत-उष्णा , दश-अचेल-अरति स्त्रिय । चर्या निषद्या शय्या-आक्रोश वध याचना ॥ १ ॥ अलाभ-रोग-तृणस्पर्शा मल सत्कारपरीसहा । प्रज्ञा-अज्ञान-सम्यक्त्वानि इति द्वाविंशति परीसहा ॥ २ ॥ )

मरणांते तकोऽमानेर जीवेन सह यस्मात् तत उपसर्गः । अथवा, अपादानसाधनः– ततस्तस्मादुपसर्गाज्जीव उपसृज्यते सम्बध्यते पीडादिभिः सह यस्मात् तत उपसर्गः । स च देवेभ्यो भवो दिव्यः, मनुष्येभ्यो भवो मानुषः, तिर्यग्योनिभ्यो भवस्तैर्यग्योनः, आत्मना संवेद्यत इत्यात्मसंवेदनीय इत्येष चतुर्भेद इति ॥ ३००५ ॥ केन पुनः कारणेन देवादिभ्यः साधूनामुपसर्गा भवन्ति ? इत्याह–

हास-प्पओस-वीमंसओ विमायाए वा भवो दिव्वो । एव च्चिय माणुस्सो कुसीलपडिसेवणचउत्थो ॥
तिरिओ भय-प्पओसा-हारावच्चाइरक्खणत्थं वा । घट्ट-त्थंभण-पवडण-लेसणओ चायसंवेओ ३००९

( हास प्रद्वेष-मीमांसातो विमात्राया वा भवो दिव्यः । एवमेव मानुष्यः कुशीलप्रतिसेवनचतुर्थः ॥ ३००६ ॥ )
( तिर्यङ् भय प्रद्वेषा ऽऽहारा-पत्य नीडरक्षणार्थं वा । घट्ट-स्तम्भन प्रपतन-श्लेषणत आत्मसंवेद्य ॥ ३००७ ॥ )

व्याख्या–हासात् क्रीडातः, असञ्जातपूर्वभवसम्बन्धादिकृतप्रद्वेषाद् वा, 'वीमंसउ' त्ति, 'किमयं स्वप्रतिज्ञातश्चलति न वा ?' इति मीमांसातो विमर्शाद् दिव्य उपसर्गो भवेत् । तथा 'विमायाए' त्ति विविधा मात्रा विमात्रा तस्याः सकाशात् किमपि हास्यात्, किमपि प्रद्वेषात्, किमपि मीमांसातोऽपरमर्थं, दिव्य उपसर्गो भवेदिति । एवं मानुषोऽप्युपसर्गश्चतुर्विधो भवेत् । केवलं 'कुसीलपडिसेवणचउत्थो' त्ति, स्त्रीषण्ड-लक्षणो यः कुशीलस्तत्प्रतिसेवनामाश्रित्य चतुर्थभेदो द्रष्टव्यः, विमात्रापक्षस्यात्र हास्यादिष्वेवान्तर्भावविवक्षणादिति । तिर्यङ् भयात्, प्रद्वेषात्, आहारार्थम्, अपत्यनीड गुहादिस्थानरक्षणार्थमुपसर्गं कुर्यादिति । आत्मसंवेदनीयस्तूपसर्गो नेत्रपतितकणिकादिघट्टनात्, अङ्गाना वा स्तम्भनात् स्पन्दनाभावात्, गर्तादौ वा पतनात्, चिरुणितग्राहाय्यङ्गाना वा लेशनात् परस्पर श्लेषणाद् भवति ॥ इति सप्तचत्वारिंशद्गाथार्थः ॥ ॥ ३००६–३००७ ॥ अथ रागादीनां यथाक्रममुदाहरणान्याह । तत्र च रागे 'रहदत्ता' इत्यादिषड्गाथाः । आसां चार्थः सकथानको मूलावश्यकादवसेय इति ॥ अथ 'नामयंता नमोरिहा' (गा०–२९६०) इत्येतद् व्याचिख्यासुराह—

पह्वीकरणं नामणमहवा नासणमओ जहाजोगं । नेयं रागाईणं तन्नामाओ नमोऽरहा ॥ ३००८ ॥

( प्रह्वीकरणं नमनम् वा नाशनमतो यथायोग्यम् । ज्ञेयं रागादीनां तन्नामात् नमोऽर्हाः ॥ ३००८ ॥ )

रागादीनां प्रह्वीकरणं स्ववशमानापादनं नमनमुच्यते, मूलतो नाशनं वा । अतो रागादीनामेवंविधं नमनं यथायोगं यथाघटमानकं ज्ञेयम् । तन्नमनाच्च नमो नमस्कारस्यार्हा अर्हन्त इति ॥ ३००८ ॥ साम्प्रतं प्राकृतशैल्या अनेकधाऽर्हच्छब्दनिरुक्तसम्भव इति दर्शयन्नाह– 'इंदिय' इत्यादिकास्तिस्रो गाथाः, एता अपि कण्ठ्याः ॥ इदानीमसौ वताऽस्थापनार्थमपान्तरालिकं नमस्कारफलमुपदर्शयति—

अरहंतनमोक्कारो जीवं मोएइ भवसहस्साओ । भावेण कीरमाणो होइ पुणो बोहिलाभाए ॥ ३००९ ॥

( अर्हन्नमस्कारो जीवं मोचयति भवसहस्रात् । भावेन क्रियमाणो भवति पुनर्बोधिलाभाय ॥ ३००९ ॥ )

नमनं रागादि प्रह्वीकरणादि

अर्हन्नम-स्कारफलम्

इह नाम-स्थापना-द्रव्य भावलक्षणनमस्कारश्चतुर्विधो गृहीतः। तत्रार्हच्छन्देन बुद्धिस्था अर्हदाकारवती स्थापना गृह्यते, तस्या नमस्कारः स्थापनानमस्कार इति व्युत्पत्त्या स्थापनानमस्कारः सगृहीतः। 'नमोकारो' त्ति इत्यनेन नामनमस्कारः। 'कीरमाणो' त्ति अञ्जलिप्रग्रहादिना क्रियमाण इत्यनेन द्रव्यनमस्कारः। 'भावेण' त्ति अनेन तु भावनमस्कार इति। तत्रार्हन्नमस्कारः क्रियमाणो जीवं मोचयति भवसहस्रात् ग्रस्तावादनन्तभवेभ्य इत्यर्थः। अनन्तभवमोचनाच्च मोक्ष प्रापयतीत्युक्त भवति। यद्यपि च काश्चित् तद्भव एव मोक्ष न प्रापयति तथापि भावेनोपयोगविशेषेण क्रियमाणो भावनाविशेषत एवान्यस्मिन्नपि जन्मनि पुनरपि बोधिलाभाय भवति। बोधिलाभश्च निश्चितोऽचिराद् मोक्षहेतुरिति। एवं बाह्याभ्यन्तरेण नामादिचतुर्विधविधानेन नमस्कारः क्रियमाणो जीव भवाद् मोचयति, पुनर्बोधिबीजं च जायते ॥ इति निर्युक्तिगाथार्थः ॥ ३००९ ॥ अत्र भाष्यम्—

अरहंतागारवई ठवणा नामं मयं नमोक्कारो। भावेणं ति य भावो दव्वं पुण कीरमाणो त्ति ॥ ३०१० ॥
य नामाइचउव्विहबज्झब्भंतरविहाणकरणाओ। सो मोएइ भवाओ होइ पुणो बोहिबीयं च ॥३०११।

( अर्हदाकारवती स्थापना नाम मत नमस्कार। भावेनेति च भावो द्रव्य पुन क्रियमाण इति ॥ ३०१० ॥ )
( इति नामादिचतुर्विधबाह्याऽभ्यन्तरविधानकरणात्। स मुच्यते भवाद् भवति पुनर्बोधिबीज च ॥ ३०११ ॥ )

गतार्थे ॥ ३०१०-३०११ ॥ तथा चाह—

अरहंतनमोक्कारो धन्नाण भवक्खयं करंताणं। हिययं अणुम्मुयंतो विसोत्तियावारओ होइ ॥३०१२॥ अर्हन्नमस्कारो विस्रोतिकावारकः

( अर्हन्नमस्कारो धन्याना भवक्षय कुर्वताम्। हृदयमनुमुञ्चन् विस्रोतिकावारको भवति ॥ ३०१२ ॥ )

धन ज्ञान दर्शन चारित्रलक्षणमर्हन्तीति धन्याः साध्वादयस्तेषा भवक्षय तद्भवजीवितक्षपणं कुर्वता यावज्जीव हृदयमनुन्मुञ्चन् विस्रोतिकाया विमार्गगमनस्यापध्यानस्य वारकोऽर्हन्नमस्कारो भवति ॥ इति निर्युक्तिगाथार्थः ॥ ३०१२ ॥ भाष्यम्—

धन्ना नाणाइधणा परित्तसंसारिणो पयणुकम्मा। भवजीवियं पुणब्भवो तस्सेहक्खयं करिंताणं ३०१३
इह विस्सोओगमणं चित्तस्स विसोत्तिया अवज्झाणं। अरहंतनमोक्कारो हिययगओ तं निवारेइ ।३०१४

( धन्या ज्ञानादिधना परीतसंसारिण पदानुकर्माण। भवजीवित पुनर्भवस्तस्येह क्षय कुर्वताम् ॥ ३०१३ ॥ )
( इह विस्रोतोगमनं चित्तस्य विस्रोतिकाऽपध्यानम्। अर्हन्नमस्कारो हृदयगतस्त निवारयति ॥ ३०१४ ॥ )

गतार्थे ॥ ३०१३-३०१४ ॥ अथार्हन्नमस्कारस्यैव महार्थता दर्शयति—

अर्हन्नमस्कारस्य महार्थता

अरहंतनमोक्कारो एवं खलु वण्णिओ महत्थो त्ति। जो मरणम्मि उवग्गे अभिक्खणं कीरई बहुसो ।३०१५

( अर्हन्नमस्कार एवं खलु वर्णितो महार्थ इति। यो मरणे उपाग्रेऽभीक्ष्णं क्रियते बहुश ॥ ३०१५ ॥ )

अर्हन्नमस्कार एव खलु वर्णितो महार्थ इति महानर्थो यस्य स महार्थोऽल्पाक्षरोऽपि द्वादशाङ्गार्थसंग्राहित्वाद् महार्थः। कथं पुनरेतदेवम् ? इत्याह– यो नमस्कारो मरणे प्राणोपरमलक्षणे उपाग्रे समीपभूतेऽभीक्ष्णमनवरतं क्रियते बहुशोऽनेकशः। ततश्च महत्यामापदि द्वादशाङ्गीं मुक्त्वा तत्स्थानेऽनुस्मरणाद् महार्थः॥ इति निर्युक्तिगाथार्थः ॥ ३०१५ ॥

कथं पुनर्द्वादशाङ्गतया नमस्कारः? इत्याशङ्क्य युक्तिमाह भाष्यकारः—

जलणाइभए सेसं मोत्तुं पेगरयणं महामोल्लं। जुधि वातिभए घेप्पइ अमोहमत्थं जह तहेह ॥३०१६॥

मोत्तुं पि बारसंगं मरणाइभएसु कीरए जम्हा। अरहंतनमोक्कारो तम्हा सो बारसंगत्थो ॥ ३०१७ ॥

सव्वं पि बारसंगं परिणामविसुद्धिहेउमित्तागं। तक्कारणभावाओ कह न तयत्थो नमोक्कारो? ॥३०१८॥

न हु तम्मि देसकाले सक्को बारसविहो सुयक्खंधो।
सव्वो अणुचिंतेउं(प्र० न विचिंतेउं) धंतं पि समत्थचित्तेणं ॥३०१९॥

अर्हन्नमस्कारो द्वादशाङ्गस्यार्थः परिणामविशुद्धिहेतुत्वात् संवेगकारित्वात् मोहोच्छेदकत्वात्

( ज्वलनादिभये शेषं मुक्त्वैकरत्नं महामूल्यम्। युधि घातिभये गृह्यतेऽमोघमस्त्रं यथा तथेह ॥ ३०१६ ॥ )
( मुक्त्वापि द्वादशाङ्गीं मरणादिभयेषु क्रियते यस्मात्। अर्हन्नमस्कारस्तस्मात् स द्वादशाङ्गार्थः ॥ ३०१७ ॥ )
( सर्वामपि द्वादशाङ्गीं परिणामविशुद्धिहेतुमात्रकाम्। तत्कारणभावात् कथं न तदर्थो नमस्कारः? ॥ ३०१८ ॥ )
( न खलु तस्मिन् देशकाले शक्यो द्वादशविधः श्रुतस्कन्धः। सर्वोऽनुचिन्तयितुमत्यर्थमपि समर्थचित्तेन ॥ ३०१९ ॥ )

सर्वाोऽपि सुगमाः, नवरं 'देसकाले' त्ति, देशः प्रस्तावस्तद्रूपः कालो देशकालस्तस्मिन् मरणलक्षणे देशकाल इति। 'धंतं पि' त्ति अत्यर्थमपीति ॥ ३०१६–३०१७–३०१८–३०१९ ॥ एकस्मिन्नपि यत्र वीतरागोक्ते पदे सति जीवः संवेगं गच्छति, 'येन च पदेन' विरागत्वं भजति निर्वेदमुपैति, तत् तस्यैकमपि पदं समस्तमोहजालोच्छेदहेतुत्वात् संपूर्णद्वादशाङ्गरूपं ज्ञानमेव भवति, तत्कार्यकर्तृत्वात्, किं पुनरनेकपदात्मको नमस्कारः संपूर्णद्वादशाङ्गज्ञानं न भविष्यति?' इत्यनया भङ्ग्या नमस्कारस्य द्वादशाङ्गरूपतां भावयन्नाह—

एगम्मि वि जम्मि पए संवेगं कुणइ वीयराय(प्र० राग)मए। तं तस्स होइ नाणं जेण विरागत्तणमुवेइ ॥३०२०

( एकस्मिन्नपि यस्मिन् पदे संवेगं करोति वीतरागमते। तत् तस्य भवति ज्ञानं येन विरागत्वमुपैति ॥ ३०२० ॥ )

एकम्मि वि जम्मि पए संवेगं कुणइ वीयराय(प्र० राग)मए। सो तेण मोहजालं छिंदइ अज्झप्पओगेणं ॥३०२१॥
ववहाराओ मरणे तं पयमेक्कं मयं नमो(प्र० नमु)क्कारो। अन्नं पि निच्छयाओ तं चेव य बारसंगत्थो ३०२२।

( एकस्मिन्नपि यस्मिन पदे संवेग करोति वीतरागमते। स तेन मोहजाल छिनत्त्यध्यात्मयोगेन ॥ ३०२१ ॥ )

( व्यवहाराद् मरणे तत् पदमेक मत नमस्कार । अन्यदपि निश्चयात् तदेव च द्वादशाङ्गार्थ ॥ ३०२२ ॥ )

गतार्था एव, नवर कि पुन' प्रस्तुते तदेक पदम् ? इत्याह– 'ववहाराउ'इत्यादि, यथा लोकव्यवहारे 'साप्रतमल्पस्तन्दुलः, प्रचुरो गोधूमः, मपन्नो यवः' इत्यादावनेकमप्येकमुच्यते, तथा मरणसमये क्रियमाणः 'पच नमोकारो' अनेकपदात्मकोऽपि व्यवहारत एक पदमात्रमभिमतः। निश्चयनयमतेन तदन्यदपि सुबन्त तिङन्तं वा यत्किमपि यत् सवेगकर निर्जराफल पद तदेतद् द्वादशाङ्गार्थ इति ॥ ३०२०-३०२१-३०२२ ॥

यदुक्त निर्युक्तिकृता– 'अभिक्खण कीरई वहुसो' (गा०–३०१५) इति। तत्र किं कारणम् ? इत्याशङ्क्याह–

जं सोऽतिनिज्जरत्थो पिडयत्थो वन्निओ महत्थो वि। कीरइ निरंतरमभिक्खणं तु बहुसो बहू वारा ।३०२३।

( यत् सोऽतिनिर्जरार्थ पिटकार्थो वर्णितो महार्थोऽपि। क्रियते निरन्तरमभीक्ष्ण तु बहुशो बहून् वारान् ॥ ३०२३ ॥ )

यद् यस्मादसौ नमस्कारोऽतिनिर्जरार्थः, तथा द्वादशाङ्गगणिपिटकार्थो महार्थश्चोक्तप्रकारेण वर्णितः, तस्मादभीक्ष्ण निरन्तर बहुशो बह्व्यो वाराः क्रियते ॥ इति गाथाष्टकार्थ' ॥ ३०२३ ॥ अथ निर्युक्तिकृदुपसहरन्नाह–

अरहंतनमोक्कारो सव्वपावप्पणासणो। मंगलाणं च सव्वेसिं पढमं होइ मंगलं॥ ३०२४ ॥

( अर्हन्नमस्कार सर्वपापप्रणाशन । मङ्गलाना च सर्वेपा प्रथम भवति मङ्गलम् ॥ ३०२४ ॥ )

अत्र 'सव्वपावप्पणासणो' इत्यस्य व्याख्यानमाह–

'सव्वपाव-प्पणासणो'-व्याख्या

पंसेइ पिवइ व हियं पाइ भवे वा जियं तओ पावं तं सव्वमट्ठसामन्नजाइभेयं पणासेइ ॥ ३०२५ ॥

( पांशयति पिबति वा हित पाति भवे वा जीवं तत पापम्। तत् सर्वमष्टसामान्यजातिभेद प्रणाशयति ॥ ३०२५ ॥ )

पांशयति मलिनयति जीवमिति पापम्, पिबति वा हितमिति पापम्, पाति वा भव एव रक्षति जीवं, न पुनस्तस्माद् निःसर्तुं ददातीति पापम्, तच्च सर्वं कर्मेहाभिप्रेतम्। कथंभूतम् ? इत्याह– 'अट्ठसामन्नजाइभेय' ति न अष्टौ सामान्येन ज्ञानावरणीयादयो जातिभेदा यस्य तदष्टसामान्यजातिभेद प्रणाशयत्युच्छेदयतीति सर्वपापप्रणाशन इति ॥ ३०२५ ॥ 'मगलाण च सव्वेसिं' इत्यादेर्व्याख्यानमाह–

'पढम'

नामाइमंगलाणं पढमं ति पहाणमहव पंचण्हं। पढमं पहाणतरयं व मंगलं पुव्वभणियत्थं ॥३०२६॥

( नामादिमङ्गलाना प्रथममिति प्रधानमथवा पञ्चानाम्। प्रथम प्रधानतरक वा मङ्गल पूर्वभणितार्थम् ॥ ३०२६ ॥ )

अर्हन्नमस्कारलक्षणं मङ्गलं नाम-स्थापनादिमङ्गलाना मध्ये प्रथमं प्रधानम्, मोक्षलक्षणप्रधानपुरुषार्थसाधकत्वात् । अथवा, प्रस्तुतानामेव पञ्चानामर्हत्-सिद्धादिभावमङ्गलानामेतत् प्रथममाद्यम्, आदावेव निर्दिष्टत्वात् । अथवा, प्रधानतरं प्रथमम्, सिद्धाद्यपेक्षयाऽर्हतां प्रधानतरत्वात्, परोपकारार्थमेव प्रवृत्तत्वादिति । 'मं गालेइ(प्र० . गालयइ) भवाओ' (गा०–२४) इत्यादिना च मङ्गलं पूर्वभणितशब्दार्थमेव ॥ इति गाथात्रयार्थः ॥ ३०२६ ॥

॥ इत्यर्हन्नमस्कारः समाप्तः ॥

अथ सिद्धनमस्कारं व्याचिख्यासुराह–

सिद्धो जो निप्फन्नो जेण गुणेण स य चोद्दसविगप्पो । नेओ नामाईओ ओयणसिद्धाइओ दव्वे ॥ ३०२७ ॥

(सिद्धो यो निष्पन्नो येन गुणेन स च चतुर्दशविकल्पः । ज्ञेयो नामादिक ओदनसिद्धादिको द्रव्ये ॥ ३०२७ ॥)

इह 'सिद्ध' इति कोऽर्थः ? उच्यते– 'षिध गत्याम्' 'राध साध संसिद्धौ' 'षिधू शास्त्रे माङ्गल्ये च' सिध्यति स्म सिद्धो यो येन गुणेन निष्पन्नः परिनिष्ठितः, न पुनः साधनीय इत्यर्थः । स च सिद्धः सामान्यतो नामसिद्धादिभेदाच्चतुर्दशविधो ज्ञेयः । तत्र नाम-स्थापनासिद्धौ सुगमौ । द्रव्यसिद्धस्तु सिद्धो निष्पन्न ओदनः, आदिशब्दात् पाकोत्तीर्णघटादिर्गृह्यते, अस्यौदनादेर्निष्पन्नत्वगुणेन परिनिष्ठितत्वात्, भावाप्रधानत्वेन च द्रव्यत्वात् ॥ इति गाथार्थः ॥ ३०२७ ॥ शेषानेकादश सिद्धभेदानाह–

कम्मे सिप्पे य विज्जाए मंते जोगे य आगमे । अत्थ-जत्ता-अभिप्पाए तवे कम्मक्खए इय ॥ ३०२८ ॥

(कर्मणि शिल्पे च विद्यायां मन्त्रे योगे चागमे । अर्थ-यात्रा ऽभिप्रायेषु तपसि कर्मक्षय इति ॥ ३०२८ ॥)

कर्मसिद्धः शिल्पसिद्धः, विद्यासिद्धः, मन्त्रसिद्धः, योगसिद्धः, आगमसिद्धः, अर्थसिद्धः, यात्रासिद्धः, अभिप्रायो बुद्धिपर्यायस्ततो बुद्धिसिद्धः, तपःसिद्धः, कर्मक्षयसिद्धः ॥ इति निर्युक्तिश्लोकसमासार्थः ॥ ३०२८ ॥

एतेषां च कर्मादिसिद्धानां स्वरूपप्रतिपादनपराः 'कम्मं जमणाईओ' इत्यादिकाः 'न किलम्मइ जो तवसा' इतिगाथापर्यन्ता एकचत्वारिंशद् गाथाः सकथानकसमासार्था मूलावश्यकटीकातोऽवसेया इति ॥ अथ कर्मक्षयसिद्धमेव प्रपञ्चतो निरुक्तविधिना प्रतिपादयन्नाह–

दीहकालरयं जं तु कम्मं से सियमट्ठहा । सियं धंतं ति सिद्धस्स सिद्धत्तमुवजायइ ॥ ३०२९ ॥

(दीर्घकालरजो यत्तु कर्म तस्य सितमष्टधा । सितं ध्मातमिति सिद्धस्य सिद्धत्वमुपजायते ॥ ३०२९ ॥)

व्याख्या–दीर्घः संतानतोऽनादित्वात् स्थितिः कालो यस्य तद् दीर्घकालम्, निसर्गनिर्मलजीवस्यानुरञ्जनात् मालिन्यापादनाद् रज इव, यथा, स्नेहेन चराचरेऽयं भवाति नाम्याद् रजः, प्रत्यक्षगम्याद् वा रज इति कर्मणः एव विशेषणम्, दीर्घकालं च तद् रजश्चेति

दीर्घकालरजः; 'ज तु कम्म' ति दीर्घकालरजोरूप यत् कर्म, दीर्घकालस्थितिकं रजोरूप यत् कर्मेत्यर्थः, एतच्चैवंविधं कर्म, तुशब्दस्य विशेषणार्थत्वादत्र भव्यस्य सम्बन्धि गृह्यते, नाभव्यस्य, तस्य वक्ष्यमाणध्मातत्वायोगात् । अथवा, भव्यसम्बन्धित्वमिह कर्मणो ध्मातत्वसामर्थ्यादेव लभ्यते । यच्छब्दोऽपि साक्षादुपात्ते कर्मणि न तथाविध साफल्यमनुभवति; अतः 'जंतुकम्म' इत्येतदन्यथा व्याख्यायते—जन्तुर्जीवस्तस्य कर्म जन्तुकर्म । अनेनाबद्धकर्मव्यवच्छेदमाह—बद्ध यत् कर्मेत्यर्थः । कथंभूतं यत् कर्म जन्तुकर्म वा ? इत्याह—'से सियमट्ठह' त्ति, ज्ञानावरणाद्यष्टप्रकारैः पूर्वं 'से' तस्य सित बद्धमित्यर्थः । अथवा, 'से सियं' ति, अनाभोगनिर्वर्तितयथाप्रवृत्तकरणेन सम्यग्ज्ञानाद्युपायतश्च क्रमेण शेषित शेष कृत स्थित्य-ऽनुभवादिभिरल्पीकृतमित्यर्थः । तद् दीर्घकालस्थितिक रजोरूप भव्यस्य संबन्धि यत्कर्म जन्तुकर्म वा पूर्वमष्टधा बद्ध तत् क्रमेण शेषित सत् किम् ? इत्याह—'सिय धत ति' त्ति, सितमित्थं बद्ध ध्मात तीव्रध्यानानलेन दग्ध क्षपित महाग्निना लोहमलवदस्येति सिद्ध इति निरुक्तिः । एव च कर्मदहनानन्तर सिद्धस्यैव सतः सिद्धत्वमुपजायते नासिद्धस्य, 'नेरइएसु नेरइए उववज्जइ' इत्यादिनिश्चयनयमताश्रयणादिति । उपजायत इति तदात्मनः स्वाभाविक सत्सिद्धत्वमनादिकर्मावृतं तदावरणविगमेनाविर्भवत्येव, न पुनरसदुपजायत इति प्रतिपत्तव्यम्, असतः खरविषाणस्येव जन्मायोगादिति । अथवा सिद्धस्य सिद्धत्व सद्भावरूपमुपजायते, न तु प्रदीपनिर्वाणकल्पमभावरूपमिति । एव नयमतान्तरव्यवच्छेदार्थमेतत् । तथा चाहुरेके—

"दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् । दिश न काञ्चिद् विदिश न काञ्चित् स्नेहक्षयात् केवलमेति शान्तिम् ॥ १ ॥
जीवस्तथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् । दिश न काञ्चिद् विदिश न काञ्चित् स्नेहक्षयात् केवलमेति शान्तिम् ॥ २ ॥"

इत्यादि । एवविधसिद्धत्वाभ्युपगमे दीक्षादिप्रयासवैयर्थ्यात्, निरन्वयक्षणभङ्गस्य चाघटमानत्वादिति ।

अथवा 'दीहकालरय' ति एतदन्यथा व्याख्यायते—रयो वेगश्चेष्टाविशेषः, फलम्, अनुभव इत्यनर्थान्तरम् । ततश्च सतानेनानुभूयमानत्वाद् दीर्घकालो रयोऽनुभवो यस्य तद् दीर्घकालरय यद् भव्यकर्म जन्तुकर्म वा । तथा 'सेसियं' ति एतदप्यन्यथा व्याख्यायते—लेश्याविशेषा(प्र० विशेषात्)श्लेषित वह्न्ययोगोलकन्यायाज्जीवेन सद् सश्लेषमुपगतम् । अष्टधा सितमित्यादि तु तथैव ॥ इति निर्युक्तिश्लोकसक्षेपार्थः ॥ ३०२९ ॥ आह—ननु यच्छेषित भवोपग्राहि चतुर्विध कर्म तद् यदि पर्यन्ते समस्थितिक भवति तदा समकालमेव क्षपयित्वा मोक्ष गच्छतीत्यर्थादवगम्यते, यदा तु विषमस्थितिक तद् भवति तदा किं करोति ? इत्याह—

नाऊण वेयणिज्जं अइबहुयं आउगं च थोवागं। गंतूण समुग्घायं खवेइ कम्मं निरवसेसं ॥३०३०॥ केवलि-समुद्घातः

( ज्ञात्वा वेदनीयमतिबहुकमायुष्क च स्तोकम् । गत्वा समुद्घात क्षपयति कर्म निरवशेषम् ॥ ३०३० ॥ )

सम्यग्—अपुनर्भावेन, उत्—प्राबल्येन कर्मणा हननं घातः प्रलयो यस्मिन् प्रयत्नविशेषेऽसौ समुद्घातः ॥ ३०३० ॥ तत्स्वरूपमेवाह—

अहवा से सियमसियं गहियं वत्तमइसंसिलिट्ठं वा। जं वा विसेसियमट्ठह त्ति खयसेसियं व त्ति॥३०३६

( अथवा तस्य सितमसित गृहीत व्याप्तमतिसश्लिष्ट वा। यद्वा विशेषितमष्टधेति क्षयशेषित वेति ॥ ३०३६ ॥ )

अथवा, 'से' तस्य जीवस्य सर्वमपि कर्म ससारानुबन्धित्वादसित कृष्णमशुभमित्यर्थः। अथवा, 'पो अन्तःकर्मणि' 'गहिय वत्त' त्ति जीवेन गृहीत व्याप्त व्याप्तिमानीतमिति मितम्। अथवा 'सेसिय' त्ति लेश्याविशेषात् श्लेषित जीवेन श्लेषविशेषमानीतमिति संश्लिष्ट वाचक कृतमिति मश्लेषितम्। 'ज वा विसेसियमट्ठह' त्ति, अथवा एकदेशेन समुदायस्य गम्यमानत्वाद् यदष्टधा विशेषित व्यवच्छिन्न तत् शेषित विशेषितमिहोच्यते। अथवा, क्षयेण क्षपणया क्रमशः शेषित स्थित्यनुभवादिनाऽल्पीकृतमित्यर्थः॥ ३०३६ ॥

अथ सित ध्मातमस्येति सिद्ध इति निरुक्तविधिमुपदर्शयन्नाह—

नेरुत्तियं सियं धतमस्स तवसा मलो व लोहस्स। इय सिद्धस्सेय सओ सिद्धत्तं सिज्झणा समए॥३०३७

उवजायइ त्ति ववहारदेसणमभावयानिसेहो वा। पज्जायंतरविगमे तप्पज्जायंतरं सिद्धो॥ ३०३८॥

( नैरुक्तिक सित ध्मातमस्य तपसा मल इव लोहस्य। इति सिद्धस्यैव सत सिद्धत्व सेधना समये॥ ३०३७॥ )

( उपजायत इति व्यवहारदेशनमभावतानिषेधो वा। पर्यायान्तरविगमे तत्पर्यायान्तर सिद्ध ॥ ३०३८॥ )

द्वे अपि गतार्थे। नवर 'अभावयानिसेहो व' त्ति, निर्वाणप्रदीपकल्पत्वादभावरूप सिद्धत्वमिति यत् कैश्चिदुच्यते, तदभिमताया अभावरूपतायाः 'सिद्धत्वमुपजायते' इत्यनेन निषेधो वा क्रियते, सिद्धत्व भावरूपमुपजायते, न पुनः पूर्वपर्यायस्य भाव एव भवतीत्यर्थः॥ ॥ ३०३७–३०३८ ॥ अथ 'नाऊण वेयणिज्ज' इत्यादिगाथायाः (गा०–३०३०) प्रस्तावनार्थमाह—

कम्मचउक्कं कमसो समं ति खयमेइ? तस्स भणियम्मि। समयं ति कए भासइ कत्तो तुल्लट्ठिईनियमो?॥

( कर्मचतुष्कं क्रमश सममिति क्षयमेति? तस्य भणिते। समकमिति कृते भाषते कुतस्तुल्यस्थितिनियम ?॥ ३०३९॥ )

भवोपग्राहि कर्मचतुष्टय तस्य मुमुक्षोर्मोक्षगमनसमये क्रमशः क्षयमेति, समक वा युगपदिति कथ्यताम्? । एव भणिते परेण पृष्टे सूरिराह–'समय ति' त्ति, समकं युगपत् तस्य तत् कर्मचतुष्क क्षयमेति न तु क्रमश इति। एव च सूरिणोत्तरे कृते पुनरपि भाषते परः– कुतः कर्मचतुष्कस्य तुल्यस्थितिनियमः? विषमनिबन्धनत्वेन विषमस्थितिकत्वस्यैव युज्यमानत्वात्, इति॥ ३०३९॥

भवोपग्राहि-कर्मचतुष्क समक क्रमशो वा क्षयमेति?

अथ विषमस्थितिकमपि समक क्षपयति। तदयुक्तम् कुतः? इत्याह—

कह व अपुन्नट्ठिइयं खवेउ कत्तो व तस्समीकरणं। कयनासाइभयाउ तो तस्स कमक्खओ जुत्तो ३०४०

( कथ वाऽपूर्णस्थितिक क्षपयतु कुतो वा तत्समीकरणम्। कृतनाशादिभयात् ततस्तस्य क्रमक्षयो युक्त ॥ ३०४०॥ )

कथ ॥ न मुमुक्षुरपूर्णस्थितिकमायुष्कापेक्षया दीर्घस्थितिकं वेदनीय-नाम-गोत्रकर्मत्रयं ह्रस्वस्थितिकायुष्कानुरोधेन क्षपयतु ह्रस्वीकरोतु, कृतनाशप्रसङ्गात् ? । कृतनाशप्रसङ्गश्चानेकभविकस्य खण्डयित्वा नाशनात् । अथायुष्कं वृद्धिमुपनीय वेदनीयादिभिः सह समस्थितिकं कृत्वा समकमेव क्षपयतीत्याशङ्क्याह-'कत्तो' इत्यादि, कुतो वाऽऽयुष्कस्य वेदनीयादिभिः सह समीकरणं समस्थितिकत्वापादनम्, अकृताभ्यागमप्रसङ्गात् ? । तत्प्रसङ्गश्च ह्रस्वस्यायुषो दीर्घत्वापादनात् । ततस्तस्य मुमुक्षोर्वेदनीयादिकर्मणा क्रमक्षय एव युक्तः प्रथममायुषस्ततः शेषाणामिति ॥ ३०४० ॥ अत्र गुरुरुत्तरमाह—

भणइ कम्मखयम्मी जयाउमाईअ तस्स निट्ठेज्जा । तो कहमत्थउ स भवे सिज्झउ व कहं सकम्मंसो ? ॥

( भण्यते कर्मक्षये यथायुरादावेव तस्य निष्ठितिष्ठेत् । तत कथं तिष्ठतु स भवे सिध्यतु वा कथं सकर्मांश ? ॥ ३०४१ ॥ )

भण्यतेऽत्रोत्तरम्—कर्मक्षये मुक्तिगमनसमयवर्तिनि कर्मक्षयकाले, पाठान्तरतः क्रमक्षये वा यथायुरादावेव तस्य निस्तिष्ठेत्-निष्ठां यायात्, क्षीयेत्यर्थः, शेषाणि तु क्रमशः पश्चात्; ततः क्रमशो क्षीणायुष्कः शेषकर्मक्षपणार्थं भवे तिष्ठतु, तदवस्थाननिबन्धनस्यायुष्कस्याभावात् ? । अथ तदभावान् सिध्यत्वसौ, किं निवार्यते ? । तदयुक्तम्, यत आयुषि क्षीणेऽपि सह वेदनीयादिकर्मांशैर्वर्तत इति सकर्मांशः कथं सिध्यतु, 'सकलकर्मक्षयादेव मोक्षः' इति वचनात् ? इति ॥ ३०४१ ॥ तर्हि किमत्र युक्तम् ? इत्याह—



तम्हा तुल्लट्ठिइयं कम्मचउक्कं सभावओ जस्स । सो अकयसमुग्घाओ सिज्झइ जुगवं खवेऊणं ।२०४२

जस्स पुण थोवमाउं हवेज्ज सेसं तियं च बहुतरयं । तं तेण समीकुरुए गंतूण जिणो समुग्घायं ॥२०४३॥

( तस्मात् तुल्यस्थितिकं कर्मचतुष्कं स्वभावतो यस्य । सोऽकृतसमुद्घातः सिध्यति युगपत् क्षपयित्वा ॥ ३०४२ ॥ )

( यस्य पुनः स्तोकमायुर्भवेत् शेषं त्रिकं च बहुतरकम् । तत् तेन समीकुरुते गत्वा जिनः समुद्घातम् ॥ ३०४३ ॥ )

द्वे अपि सुगमे । नवरं 'तेण' त्ति तत् शेषकर्मत्रिकमपवर्तनात खण्डयित्वा तेनायुष्केण सम कुरुत इति (ग्रन्थाग्रं०—२५०००) ॥ ॥ ३०४२-३०४३ ॥ ननु कृतनाशादिदोष उक्तः स कथं परिहर्तव्य ? इत्याह—

कयनासाइविघाओ कओ पुरा जह य नाण-किरियाहि । कम्मस्स कीरड खओ न चेदमोक्खादओ दोसा ॥

( कृतनाशादिविघात कृत पुरा यथा च ज्ञान क्रियाभ्याम् । कर्मणः क्रियते क्षया न चेद्मोक्षाद्यो दोषाः ॥ ३०४४ ॥ )

कृतनाशादिदोषाणां विघातः परिहारः कृतोऽस्माभिः । क्व ? पुरा पूर्वमुपशमश्रेणिविचारे "न हि दीहकालियस्स वि नासो तस्साणुभूइओ खिप्पं । बहुया व्वायस्स व सुयाणिवर्ट्टीणे मोक्खो ॥ १ ॥ (गा०—२०४८)इत्यादिना ग्रन्थेन । यथा च ज्ञान-क्रियाभ्यां निरवशेषस्थितिकस्यापि कर्मणः क्षयः क्रियते, तथा प्रागपि 'नाणमुक्खासिज्या गमो विय (प्र०.. ०जइ किरियाए) गजइरोगो व्व' (गा०—२०५६)

इत्यादिनाऽनेकशः प्रोक्तम् । न चेदुपक्रम इष्यते, तर्हमोक्षादयो दोषा इत्यपि 'जइ ताणुभूऽउ च्चिय खविजए कम्ममन्नहा न मय (गा०-२०५२) इत्यादिना प्रागुक्तमेव । तदेवमेतावता 'नाऊण वेयणिज्ज' (गा०-३०३०) इत्यादिनिर्युक्तिगाथा व्याख्यातेति ॥३०४४॥

अथ परप्रेर्यमाशङ्क्य परिहरन्नाह—

## असमट्टिईण निअमो को थोवं आउयं न सेसं ति। परिणामसहावाओ अद्धुववंधो व्व तस्सेव ॥३०४५॥

(असमस्थितीनां नियमः कः स्तोकमायुष्कं न शेषमिति । परिणामस्वभावादध्रुवबन्ध इव तस्यैव ॥ ३०४५ ॥)

'असमस्थितिकानां कर्मणां स्तोकमायुरेव, न शेषं वेदनीयादिकम्' इति कोऽयं नियमः, येनोच्यते—'नाऊण वेयणिज्ज अइबहुय आउगं च थोवाग' इति ? । इदमपि कस्माद् नोच्यते—'नाऊण आउयं खलु अइबहुयं थोवयं च वेयणियं' इति ? । अत्रोच्यते—बन्धपरिणामस्वाभाव्यात्, एवंभूतो ह्यायुषः कोऽपि बन्धपरिणामो वर्तते, येन पर्यन्ते वेदनीयाद्यपेक्षया समं स्तोकं वा भवति, न त्वधिकमिति । अत्र दृष्टान्तमाह—यथा बन्धपरिणामस्वाभाव्यादध्रुवबन्धस्तस्यैवायुषो भवति, अन्तर्मुहूर्तमात्रबन्धकालत्वात्; न तु वेदनीयादेः, तस्य ध्रुवबन्धित्वात्, एवमत्रापि स्तोकत्वमायुष एव, न तु वेदनीयादेरिति ॥ ३०४५ ॥ आह—ननु समुद्घातगतो जन्तुर्वेदनीयादिकर्मणः किं करोति ? इत्याह—

## विसमं स करेइ समं समोहओ बंधणेहिं ठिइए य । कम्मदव्वाइं बंधणाइं कालो ठिई तेसिं ॥३०४६॥

(विषमं स करोति समं समवहतो बन्धनैः स्थित्या च । कर्मद्रव्याणि बन्धनानि कालः स्थितिस्तेषाम् ॥ ३०४६ ॥)

स समवहतः केवलिसमुद्घातगतो जीव आयुष्कादधिकत्वेन विषमं वेदनीयादिकर्मत्रयमपवर्तनातः खण्डयित्वा आयुष्केण समं करोति । कैः कृत्वा समं करोति ? इत्याह— बध्यते जीवो यैस्तानि बन्धनानि तैर्बन्धनैः कर्मद्रव्यैः, स्थित्या च काललक्षणया । अत एवाह— कर्मद्रव्याणि बन्धनानि भण्यन्ते, कालस्तु स्थितिस्तेषां वेदनीयादीनामिति । समीकुर्वंश्चैतद्विशिष्टदलिकनिषेकेणान्तर्मुहूर्तस्थितिकं सर्वं करोति ॥३०४६॥

कथम् ? इत्याह—

## आउयसमयसमाए गुणसेढीए तदसंखगुणियाए। पुव्वरइयं खवेहिइ जह सेलेसीए पइसमयं ॥३०४७

(आयुष्कसमयसमया गुणश्रेण्या तदसंख्यगुणितया । पूर्वरचितं क्षपयिष्यति यथा शैलेश्यां प्रतिसमयम् ॥ ३०४७ ॥)

वेद्यमानस्यायुषो यावन्तः समयाः शेषा अवतिष्ठन्ते तत्समयसमानयाऽन्तर्मुहूर्तप्रमाणयेत्यर्थः, दलिकमाश्रित्यासंख्येयगुणया, प्रथमसमयनिषिक्तदलिकाद् द्वितीयसमयनिषिक्तमसंख्येयगुणम्, ततोऽपि तृतीयसमयनिषिक्तमसंख्येयगुणम्, एवं यावच्चरमसमयनिषिक्तमसंख्येयगुणमिति, एवमसंख्यगुणया(प्र० ०गुणाना) स्थानान्तरप्रसिद्धया गुणश्रेण्या तद् वेदनीयादिकर्मत्रयं केवलज्ञानाभोगेनाकलय्य तथा रचयति यथाऽनन्तरोक्तप्रकारेण पूर्वरचितं सदेतत् शैलेश्यां प्रतिसमयं क्षपयंश्चरमसमये सर्वमसौ क्षपयिष्यति ।

त्रिकापेक्षयायुः स्तोकपरिणामस्वाभाव्यात्

समुद्घाते आयुषश्चरमान्तर्मुहूर्ते कर्मत्रिकस्यापवर्तनातः समयसमीकरणम्

असंख्यगुणश्रेण्या निषेकः

आवज्जणमुवओगो वावारो वा तदत्थमाईए । अंतोमुहुत्तमेत्तं काउं कुरुए समुग्घायं ॥ ३०५१ ॥

( आवर्जनमुपयोगो व्यापारो वा तदर्थमादौ । अन्तर्मुहूर्तमात्र कृत्वा कुरुते समुद्घातम् ॥ ३०५१ ॥ )

व्याख्या– तत्रायुःशेषाणामविकस्थितिकाना वेदनीयादिकर्मणा समुद्घातेन समुद्घातः । त च गन्तुमनाः प्रारिप्सुः पूर्वमावर्जीकरणमभ्येति विदधाति । कथभूत तत् ? इति । उच्यते– तदर्थं समुद्घातकरणार्थमादौ केवलिन उपयोगो 'मयाऽधुनेद कर्तव्यम्' इत्येवरूपः, उदयावलिकाया कर्मप्रक्षेपरूपो व्यापारो वाऽऽवर्जनमुच्यते । तथाभूतस्य (प्र० तस्याभूतस्य) करणमावर्जीकरण, *तदन्तर्मुहूर्तमात्रं कालं कृत्वा तत. समुद्घात कुरुत इति ॥ ३०५०-३०५१ ॥ कथभूतं तदित्याशङ्क्य 'दड कवाडे' इत्यादिगाथा (गा०–३०३१) व्याचिख्यासुराह–

समुद्घात-प्रक्रिया

उड्ढाहाययलोगंतगामिण सो सदेहविक्खंभं । पढमसमयम्मि दंडं करेइ बिइयम्मि य कवाडं ॥३०५२॥

तइयसमयम्मि मंथं चउत्थए लोगपूरणं कुणइ । पडिलोमं साहरणं काउं तो होइ देहत्थो ॥३०५३॥

( ऊर्ध्वाऽधआयतलोकान्तगामिन स स्वदेहविष्कम्भम् । प्रथमसमये दण्ड करोति द्वितीये च कपाटम् ॥ ३०५२ ॥ )

( तृतीयसमये मन्थान चतुर्थके लोकपूरण करोति । प्रतिलोम सहरण कृत्वा ततो भवति देहस्थ ॥ ३०५३ ॥ )

व्याख्या– ऊर्ध्वमधश्चायत दीर्घमुभयतोऽपि लोकान्तगामिन स्वदेहप्रमाणविष्कम्भ 'सः' केवली केवलज्ञानाभोगतः प्रथमसमये जीवप्रदेशसघातात्मक दण्ड करोति । द्वितीयसमये तु तमेव दण्ड पूर्वापरदिग्द्वयप्रसारणादुभयपार्श्वतो लोकान्तगामिन कपाटमिव कपाट करोति । तृतीयसमये तमेव कपाट दक्षिणोत्तरदिग्द्वयप्रसारणेन मन्थसदृशत्वाल्लोकान्तप्राप्तमेव मन्थान करोति । एव च लोकस्य प्रायो बहु पूरित भवति मन्थान्तराणि त्वपूरितानि तिष्ठन्ति, जीव पुद्गलयोरनुश्रेणि गमनात् । ततश्चतुर्थसमये तान्यपि मन्थान्तराणि सह निष्कुटैः पूरयति ततश्च सकललोक' पूरितो भवतीति । 'साहरणा' (गा०-३०३१) इत्यादेर्व्याख्यामाह– 'पडिलोममि'त्यादि, इदमत्र हृदयम्– लोकपूरणानन्तरमेव पञ्चमे समये यथोक्तक्रमात् प्रतिलोम मन्थान्तराणि सहरति, जीवप्रदेशान् सकर्मकान् सकोचयति, षष्ठे समये मन्थानमुपसहरति, घनतरसकोचात्; सप्तमसमये तु कपाटमुपसहरति, दण्डात्मनि सकोचात्, अष्टमे तु समये दण्डमप्युपसहृत्य शरीरस्थ एव भवतीति ॥३०५२-३०५३॥

आह– ननु समुद्घातगतस्य मनोवाक्काययोगेषु मध्ये को योगः कस्मिन् समये व्याप्रियते ? इत्याशङ्क्याह—

---

* प्रज्ञापनासूत्रे समुद्घातपदे मलयगिरीयवृत्तौ–(१) 'आवर्जनमावर्ज', आत्मान प्रतिमोक्षस्याभिमुखीकरणम्, आत्मनो मोक्ष प्रत्युपयोजनमित्यर्थ । (२) आवर्ज्यतेऽभिमुखीक्रियते मोक्षोऽनेनेति, आवर्ज शुभमनोवाक्कायव्यापारविशेष । (३) अपरे–आवर्जितो नाम अभिमुखीकृत, तथाभव्यत्वेनावर्जितस्य मोक्षगमन प्रत्यभिमुखीकृतस्य करण क्रिया शुभयोगव्यापारणमावर्जितकरणम् । (४) आयोजिकाकरणम्–आमर्यादया केवलिदृष्ट्या योजन शुभाना योगाना व्यापारणमिति । (५) आउस्सियकरणं सर्वकेवलिनामावश्यककरणम् ।' हारिभद्रीयवृत्तौ 'आवर्जीकरण' वैयावृत्य समरचनप्रयत्नकरणम् ।

| | | | |
|---|---|---|---|
| चरमसमये | ०००००००००० | ०००००००००० | ०००००००००० |
| — ,, | ०००००००० | ०००००००० | ०००००००० |
| — ,, | ००००००० | ००००००० | ००००००० |
| च० ,, | ०००००० | ०००००० | ०००००० |
| तृ० ,, | ००००० | ००००० | ००००० |
| द्वि० ,, | ०००० | ०००० | ०००० |
| प्र० ,, | ००० | ००० | ००० |

← अत्र गुणश्रेणिस्थापना—

आयुषस्तु गुणश्रेणिर्न भवति, किन्तु यथाबद्धमेव तद् वेद्यते। अतस्तस्यैव स्थापना →

'जह उल्ला साडीया' इत्यादिगाथाया' (गा०-३०३२)

०००
००००
०००००
००००००
०००००००
००००००००
००००००००००

पूर्वार्धं सुगमत्वाद् न व्याख्यातम्। उत्तरार्धं तु यदुक्तम्— 'तह कम्मलहुयसमए' त्ति। तत्र कर्मलघुतायाः समयः कः? इत्याह—

**कम्मलहुयाए समओ भिन्नमुहुत्तावसेसओ कालो। अन्ने जहन्नमेयं छम्माससमुक्कोसमिच्छंति॥ ३०४८** (समुद्घातो न पण्मासेभ्यः प्राक् किन्तु चरमान्तर्मु०-प्राक्)

( कर्मलघुतायाः समयो भिन्नमुहूर्तावशेषक काल। अन्ये जघन्यमेतत् पड् मासानुत्कृष्टमिच्छन्ति॥ ३०४८॥ )

कर्मण आयुषो लघुतायाः समयोऽत्र भिन्नमुहूर्तावशेषः कालो जघन्यतः, उत्कृष्टतश्चान्तर्मुहूर्तावशेषे निजमायुर्विज्ञाय तदधिकवेदनीयादि कर्मस्थितिविघातार्थं केवली समुद्घातमारभत इत्यर्थः। अन्ये तु सूरय एत भिन्नमुहूर्तलक्षण जघन्यमेव काल मन्यन्ते, उत्कृष्ट तु पड् मासा-निच्छन्ति— जघन्यतोऽन्तर्मुहूर्तशेषायुष्क उत्कृष्टतस्तु पण्मासावशेषायुः समुद्घात करोतीति केचिद् मन्यन्त इत्यर्थः॥ ३०४८॥

तदेतदन्यमतमयुक्तमिति दर्शयन्नाह—

**तं नाऽणन्तरसेलेसिवयणओ जं च पाडिहेराण। पच्चप्पणमेव सुए इहरा गहणं पि होज्जाहि॥३०४९॥**

( तद् नानन्तरशैलेशीवचनतो यच्च प्रातिहारकाणाम्। प्रत्यर्पणमेव श्रुते इतरथा ग्रहणमपि भवेत्॥ ३०४९॥ )

तदेतदन्यमतं न युक्तम्, आगमविरोधात्। तद्विरोधश्च समुद्घातानन्तरं तत्र शैलेशीप्रतिपत्तिवचनात्, शैलेश्यनन्तरं च सिद्धिगमनात्; कुतः पण्मासविशेषायुष्कत्वम्?। आनन्तर्यं पड्भिरपि मासैर्विवक्षया घटत एवेति चेत्? इत्याशङ्क्याह— 'ज चे'त्यादि यस्माच्च समुद्घाताद् निवृत्य शरीरस्थस्य प्रातिहारक-पीठफलकादीना "कायजोगं जुंजमाणे आगच्छेज्जा वा, गच्छेज्जा वा, चिट्ठेज्जा वा, निसीएज्जा वा, तुयट्टिज्जा वा, अनुयट्टिज्जा वा, उल्लघेज्जा वा पाडिहारीय पीढफलगं, संथारगं पच्चप्पिणिज्ज" ('काययोग युञ्जान आगच्छेद् वा, गच्छेद् वा, तिष्ठेद् वा, निषीदेद्वा, त्वग्वर्तयेद् वा, अनुघटेद् वा उल्लङ्घेद् वा, प्रातिहारक पीठफलक, संस्तारक प्रत्यर्पयेत्।) इति प्रज्ञापनासूत्ररूपे श्रुते प्रत्यर्पणमेवोक्तम्, इतरथा पण्मासावशेषायुष्कत्वेन चिरजीवित्वे तेषा ग्रहणमपि स्यात्, न च तत् तत्रोक्तम्। तस्मादन्तर्मुहूर्तावशेषायुरेव समुद्घातं करोतीति॥ ३०४९॥ अथ समुद्घातशब्दार्थं समुद्घातारम्भात् पूर्वव्यापारनिरूपणार्थं चाह—

**तत्थाउयसेसाहियकम्मसमुग्घायणं समुग्घाओ। तं गन्तुमणो पुव्वं आवज्जीकरणमब्भेइ॥३०५०॥**

( तत्रायुष्कशेषाधिककर्मसमुद्घातन समुद्घात। तद् गन्तुमना पूर्वमावर्जीकरणमभ्येति॥ ३०५०॥ )

आवर्जी करणम्

आवज्जणमुवओगो वावारो वा तदत्थमाईए । अंतोमुहुत्तमेत्तं काउं कुरुए समुग्घायं ॥ ३०५१ ॥

( आवर्जनमुपयोगो व्यापारो वा तदर्थमादौ । अन्तर्मुहूर्तमात्र कृत्वा कुरुते समुद्घातम् ॥ ३०५१ ॥ )

व्याख्या– तत्रायु शेषाणामधिकस्थितिकाना वेदनीयादिकर्मणा समुद्घातन समुद्घातः । त च गन्तुमना' प्रारिप्सुः पूर्वमावर्जीकरणमभ्येति विदधाति । कथभूत तत् ? इति । उच्यते– तदर्थं समुद्घातकरणार्थमादौ केवलिन उपयोगो 'मयाऽधुनेद कर्तव्यम्' इत्येवरूपः, उदयावलिकाया कर्मप्रक्षेपरूपो व्यापारो वाऽऽवर्जनमुच्यते । तथाभूतस्य (प्र० तस्याभूतस्य) करणमावर्जीकरण, *तदन्तर्मुहूर्तमात्र कालं कृत्वा तत. समुद्घात कुरुत इति ॥ ३०५०-३०५१ ॥ कथभूत तदित्याशङ्क्य 'दड कवाडे' इत्यादिगाथा (गा०–३०३१) व्याचिख्यासुराह–

समुद्घात-प्रक्रिया

उड्ढाहाययलोगंतगामिणं सो सदेहविक्खंभं । पढमसमयम्मि दंडं करेइ बिइयम्मि य कवाडं ॥३०५२॥

तइयसमयम्मि मंथं चउत्थए लोगपूरणं कुणइ । पडिलोमं साहरणं काउं तो होइ देहत्थो ॥३०५३॥

( ऊर्ध्वाऽधआयतलोकान्तगामिन स स्वदेहविष्कम्भम् । प्रथमसमये दण्ड करोति द्वितीये च कपाटम ॥ ३०५२ ॥ )

( तृतीयसमये मन्थान चतुर्थके लोकपूरण करोति । प्रतिलोम सहरण कृत्वा ततो भवति देहस्थ ॥ ३०५३ ॥ )

व्याख्या– ऊर्ध्वमधश्चायत दीर्घमुभयतोऽपि लोकान्तगामिन स्वदेहप्रमाणविष्कम्भ 'सः' केवली केवलज्ञानाभोगतः प्रथमसमये जीवप्रदेशसघातात्मक दण्डं करोति । द्वितीयसमये तु तमेव दण्ड पूर्वापरदिग्द्वयप्रसारणादुभयपार्श्वतो लोकान्तगामिन कपाटमिव कपाट करोति । तृतीयसमये तमेव कपाट दक्षिणोत्तरदिग्द्वयप्रसारणेन मन्थसदृशत्वाल्लोकान्तप्राप्तमेव मन्थान करोति । एव च लोकस्य प्रायो बहु पूरित भवति मन्थान्तराणि त्वपूरितानि तिष्ठन्ति, जीव पुद्गलयोरनुश्रेणि गमनात् । ततश्चतुर्थसमये तान्यपि मन्थान्तराणि सह निष्कुटैः पूरयति ततश्च सकललोक' पूरितो भवतीति । 'साहरणा' (गा०-३०३१) इत्यादेर्व्याख्यामाह– 'पडिलोममि'त्यादि, इदमत्र हृदयम्– लोकपूरणानन्तरमेव पञ्चमे समये यथोक्तक्रमात् प्रतिलोम मन्थान्तराणि सहरति, जीवप्रदेशान् सकर्मकान् सकोचयति, षष्ठे समये मन्थानमुपसहरति, घनतरसकोचात्; सप्तमसमये तु कपाटमुपसहरति, दण्डात्मनि सकोचात्, अष्टमे तु समये दण्डमप्युपसहृत्य शरीरस्थ एव भवतीति ॥३०५२-३०५३॥

आह– ननु समुद्घातगतस्य मनो-वाक् काययोगेषु मध्ये को योगः कस्मिन् समये व्याप्रियते ? इत्याशङ्क्याह—

---

* प्रज्ञापनासूत्रे समुद्घातपदे मलयगिरीयवृत्तौ-(१) 'आवर्जनमावर्ज , आत्मान प्रतिमोक्षस्याभिमुखीकरणम् , आत्मनो मोक्ष प्रत्युपयोजनमित्यर्थ । (२) आवर्ज्यतेऽभिमुखीक्रियते मोक्षोऽनेनेति, आवर्ज शुभमनोवाकायव्यापारविशेष । (३) अपरे–आवर्जितो नाम अभिमुखीकृत , तथाभव्यत्वेनावर्जितस्य मोक्षगमन प्रत्यभिमुखीकृतस्य करण क्रिया शुभयोगव्यापारणमावर्जितकरणम् । (४) आयोजिकाकरणम–आमर्यादया केवलिदृष्ट्या योजन शुभाना योगाना व्यापारणमिति । (५) आउस्सियकरण सर्वकेवलिनामावश्यककरणम् ।' हारिभद्रीयवृत्तो 'आवर्जीकरण' वेद्यायुष समरचनप्रयत्नकरणम् ।

न किर समुग्घायगओ मण-वइजोगप्पओयणं कुणइ। ओरालियजोगं पुण जुंजइ पढम-ट्ठमे समए ॥
उभयव्वावाराओ तम्मीसं वीय-छट्ठ-सत्तमए। ति-चउत्थ-पंचमे कम्मयं तु तम्मत्तचेट्ठाओ ॥३०५५॥

( न किल समुद्घातगतो मनो वाग्योगप्रयोजनं करोति। औदारिकयोग पुनर्युनक्ति प्रथमाष्टमे समये ॥ ३०५४ ॥ )
( उभयव्यापारात् तन्मिश्र द्वितीय षष्ठ-सप्तमेषु। तृतीय चतुर्थ पञ्चमेषु कार्मण तु तन्मात्रचेष्टात ॥ ३०५५ ॥ )

व्याख्या–किलश द आप्तोक्तौ। इह समुद्घातगत. केवली मनो-वाग्योगयोः प्रयोजन व्यापारण तावद् न करोत्येव, प्रयोजनाभावात्। औदारिककाययोग पुन. प्रथमाष्टमसमययोर्युनक्ति व्यापारयति, दण्डकरणादिक्रियाया तत्प्रयत्नविधानात्। द्वितीय षष्ठ-सप्तमसमयेषु तु तन्मिश्रम्– औदारिक कार्मणेन मिश्रं व्यापारयति, उभयप्रयत्नसद्भावात्। तृतीय-चतुर्थ पञ्चमसमयेषु पुनः 'कम्मय' ति कार्मणकाययोगमेव व्यापारयति, तन्मात्रचेष्टनादिति ॥ ३०५४-३०५५ ॥ समुद्घाताद् निवृत्तः किमसौ करोति ? इत्याह—

विणिवत्तसमुग्घाओ तिन्नि वि जोए जिणो पउंजेज्ज। सच्चमसच्चामोसं च सो मणं तह वईजोगं॥ ३०५६ ॥
ओरालियकाओगं गमणाई पाडिहारियाणं वा। पच्चप्पणं करेज्जा जोगनिरोहं तओ कुरुए॥ ३०५७॥



( विनिवृत्तसमुद्घातस्त्रीनपि योगान जिन प्रयुञ्जीत। सत्यमसत्यामृष च स मनस्तथा वाग्योगम ॥ ३०५६ ॥ )
( औदारिककाययोग गमनादि प्रत्याहार्याणा वा। प्रत्यर्पण कुर्याद् योगनिरोध तत कुरुते ॥ ३०५७ ॥ )

व्याख्या– इह समुद्घातगतस्तावद् न कोऽपि सिध्यति, निवृत्तसमुद्घातोऽप्यन्तर्मुहूर्तं भव एव केवली तिष्ठति। तत्र च तिष्ठन्नसौ मनो वाक् कायलक्षणांस्त्रीनपि योगान प्रयुञ्जीत। तत्र मनोयोगं, वाग्योग च सत्यमसत्यामृषं च प्रयुङ्क्ते, असत्य मिश्रयोस्तस्यासभवात्। काययोगं त्वौदारिक प्रयुञ्जानो गमनागमनादिक प्रत्याहरणीयगृहीतपीठफलकादिप्रत्यर्पणं वा कुर्यात्, तत एतेषा योगाना निरोध करोतीति ॥ ३०५६-३०५७ ॥ अत्र परप्रश्नमाशङ्क्योत्तरमाह—

किं न सजोगो सिज्झइ स बंधहेउ त्ति जं सजोगो य। न समेइ परमसुक्कं स निज्जराकारणं झाणं ३०५८

( किं न सयोग सिध्यति स बन्धहेतुरिति यत् सयोगश्च। न समेति परमशुक्ल स निर्जराकारण ध्यानम् ॥ ३०५८ ॥ )

ननु किमिति योगनिरोध करोति, सयोग एवासौ किं न सिध्यति ? इति परेण पृष्टे सत्याह– यस्मात् 'स' त्रिविधोऽपि योग' कर्मणो बन्धहेतु., कर्मबन्धश्च ससारनिबन्धनमेव, इति कथं सयोग' सिध्यति ?। किञ्च, पर्यन्ते सकलकर्मनिर्जराया. परमशुक्लध्यानमेव कारणम्, तच्च सयोग सन् जन्तुर्न समेति न प्राप्नोति, सयोगस्य सक्रियत्वात्, परमशुक्लध्यानस्य च समुच्छिन्नाशेषक्रियारूपत्वात्, इति कथं सयोगः सिध्यतीति ?। तस्माद् योगनिरोध कर्तव्य' ॥ ३०५८ ॥ कथ पुनस्त करोति ? इत्याह—

योगनिरोध-प्रक्रिया

पज्जत्तमित्तसन्निस्स जत्तियाइं जहन्नजोगिस्स। होंति मणोदव्वाइं तव्वावारो य जम्मत्तो॥ ३०५९॥
तदसंखगुणविहीणं समए समए निरुंभमाणो सो। मणसो सव्वनिरोहं करे असंखेज्जसमएहिं॥३०६०॥
पज्जत्तमेत्तबिंदियजहन्नवइजोगपज्जया जे उ। तदसंखगुणविहीणे समए समए निरुंभंतो॥ ३०६१॥
सव्ववइजोगरोहं संखाईएहिं कुणइ समएहिं। तत्तो य सुहुमपणयस्स पढमसमओववन्नस्स॥ ३०६२॥
जो किर जहन्नजोगो तदसंखेज्जगुणहीणमेक्केक्के। समए निरुंभमाणो देहतिभागं च मुंचतो॥३०६३॥
रुंभइ स कायजोगं संखाईएहिं चेव समएहिं। तो कयजोगनिरोहो सेलेसीभावयामेइ॥ ३०६४॥

( पर्याप्तमात्रसञ्ज्ञिनो यावन्ति जघन्ययोगिन । भवन्ति मनोद्रव्याणि तद्व्यापारश्च यन्मात्र ॥ ३०५९ ॥ )
( तदसंख्यगुणविहीन समये समये निरुन्धान स । मनस सर्वनिरोध कुर्यादसंख्येयसमये ॥ ३०६० )
( पर्याप्तमात्रद्वीन्द्रियजघन्यवाग्योगपर्यया ये तु । तदसंख्यगुणविहीनान् समये समये निरुन्धान ॥ ३०६१ ॥ )
( सर्ववाग्योगरोधं संख्यातीतै करोति समयै । ततश्च सूक्ष्मपनकस्य प्रथमसमयोपपन्नस्य ॥ ३०६२ ॥ )
( य किल जघन्ययोगस्तदसंख्येयगुणहीनमेकैकस्मिन् । समये निरुन्धानो देहत्रिभागं च मुञ्चन् ॥ ३०६३ ॥ )
( रुणद्धि स काययोग संख्यातीतैरेव समये । तत कृतयोगनिरोध शैलेशीभावतामेति ॥ ३०६४ ॥ )

पाठसिद्धा एव ॥ ३०५९-३०६० ३०६१-३०६२-३०६३-३०६४ ॥ शैलेशीशब्दव्युत्पत्तिमाह—

'शैलेशी' विनिवार्थाः

सेलेसो किल मेरू सेलेसी होइ जा तदचलया। होउं व असेलेसो सेलेसीहोइ थिरयाए॥ ३०६५॥
अहवा सेलु व्व इसी सेलेसीहोइ सोऽतिथिरयाए। से व अलेसी होइ सेलेसीहोअलोवाओ॥ ३०६६॥
सीलं व समाहाणं निच्छयओ सव्वसंवरो सो य। तस्सेसो सीलेसो सेलेसी होइ तदवत्था॥ ३०६७॥

( शैलेश किल मेरु शैलेशी भवति या तदचलता। भूत्वा वाऽशैलेश शैलेशीभवति स्थिरतया ॥ ३०६५ ॥ )
( अथवा शैल इव ऋषि शैलेशीभवत्यतिस्थिरतया। स वाऽलेश्यो भवति शैलेशीभवत्यलोपात् ॥३०६६ ॥ )
( शीलं वा समाधान निश्चयत सर्वसंवर स च। तस्येश शीलेश शैलेशीभवति तदवस्था ॥ ३०६७ ॥ )

व्याख्या शैलेशो मेरुस्तस्येवाऽचलता स्थिरताऽस्यामवस्थाया सा शैलेशी। अथवा, अशैलेशः शैलेश इव स्थिरतया भवति शैलेशी 'भवति'

भावात् कर्माभावात् तक्रो रागादिक्लेशः कुतः ? । अथ गतिरेव क्लेशनिमित्तमिष्यते, तर्हि किमजीवाना परमाण्वादीना गतिमत्त्वे सत्यपि
तकः क्लेशो न भवति ? । तस्मादनैकान्तिकोऽय हेतुरिति । अथ परस्य मतिर्भवेत्– जीवस्यैव धर्मः क्लेशः स कथमजीवस्य परमाण्वादे-
र्भवेत् ?, तर्हि हन्त ! गतिमत्त्वे सति य क्लेशित्वधर्मो भवस्थस्य मनुष्यादेर्दृष्टः स कथ भवात् ससाराद् विमुक्तस्य भवेत् ?– न भवत्येवे-
त्यर्थः । एव गत्यागमित्वमपि कर्मनिमित्तमेव, ततस्तदपि कर्मविमुक्तस्य गतिमत्त्वे सत्यपि न भवतीति स्वयमेव द्रष्टव्यम् । समयमेक च
गतिर्यत् कर्माभावेऽपि भवति, तत्र 'लाउ य' (गा०–३१४१) इत्यादिना कारणमुक्तम्, इत्यल बहुभाषितेनेति ॥३१५४–३१५५–३१५६॥

अथ वक्ष्यमाणस्य प्रस्तावनामाह—

गतेर्निघातः कुतः ?

**जं गइमओ विघाओऽवस्सं तक्कारणं च जदवस्सं। विहयरसावत्थाणं जओ य गमणं तओ पुच्छा ।३१५७।**

( यद् गतिमतो विघातोऽवश्य तत्कारण च यदवश्यम्। विहतस्यावस्थान यतश्च गमन तत पृच्छा ॥ ३१५७ ॥ )

यद् यस्माद् गतिमतोऽवश्य क्वचिदपि गतेर्निघातो भवति, तस्य च गतिनिघातस्यावश्यमेव कारण किमपि यद् यस्माद् भवति, न तु
निर्हेतुकोऽसौ जायते, अतिप्रसङ्गात् । विहतस्य च निषिद्धगतेश्च तस्य नियमेनावस्थान भवति । यत्र चावस्थान तत्र यतो यस्मात् स्थानात्
तस्य गमनं भवति 'तदवश्य वक्तव्यम्' इति शेषः । ततस्तस्मात् पृच्छा विधीयते ॥ इति सप्ततिगाथार्थः ॥ ३१५७ ॥

केय पुनः पृच्छा ? इत्याह—

**कहिं पडिहया सिद्धा कहिं सिद्धा पइट्ठिया। कहिं बोंदिं चइत्ताणं कत्थ गंतूण सिज्झइ ? ॥ ३१५८ ॥**

( कुत्र प्रतिहता सिद्धा कुत्र सिद्धा प्रतिष्ठिता । कुत्र शरीर त्यक्त्वा कुत्र गत्वा सिध्येयु ॥ ३१५८ ॥ )

अत्रोत्तरमाह—

**अलोए पडिहया सिद्धा लोयग्गे य पइट्ठिया । इहं बोंदिं चइत्ताणं तत्थ गंतूण सिज्झइ ॥ ३१५९ ॥**

( अलोके प्रतिहता सिद्धा लोकाग्रे च प्रतिष्ठिता । इह शरीर त्यक्त्वा तत्र गत्वा सिध्येयु ॥ ३१५९ ॥ )

एतद् निर्युक्तिश्लोकद्वयं सुबोधम्, तथापि नयविचार किञ्चिद् भाष्यकारः प्राह—

गोन्दीत्याग एव सिद्धत्वम्

**जमिह बोंदिच्चाओ तदेव सिद्धत्तणं च जं चेह । तस्साहणं ति तो पुव्वभावनयओ इहं सिद्धी ॥ ३१६० ॥**
**जेण उ न बोंदिकाले सिद्धो चायसमए य जं गमणं । पच्चुप्पण्णनयमयं सिज्झइ गंतूण तेणेह ।३१६१**

( यदिह शरीरत्यागस्तदेव सिद्धत्व च यच्चेह । तत्साधनमिति तत पूर्वभावनयत इह सिद्धि ॥ ३१६० ॥ )
( येन तु न शरीरकाले सिद्धस्त्यागसमये च यद् गमनम् । प्रत्युत्पन्ननयमत सिध्यति गत्वा तेनेह ॥ ३१६१ ॥ )

व्याख्या—यस्मादिह मनुष्यक्षेत्रे बोन्द्याः शरीरस्य त्यागस्तदेव च सिद्धत्व यः शरीरत्यागः, यस्माच्चेहैव तस्य सिद्धत्वस्य साधनं कारण सम्यक्त्वप्रतिपत्त्यादि शैलेशीपर्यवसान तत्साधनमस्ति, ततस्तस्माद् यः सिद्धिगमनसमयात् पूर्वमेव भाव मन्यते स पूर्वभावनयो व्यवहारनयविशेषः कश्चित् । तत पूर्वभावनयतः पूर्वभावनयमतेनेहैव सिद्धिरिति । 'येन' यस्मात् पुनर्बोन्दिकाल उपान्त्यसमये न नैव सिद्ध, यस्मात्त्यागसमये गमनम्, य एव बोन्द्यास्त्यागसमयः, 'परभवपढमे साडण'(परभवप्रथमे शाटनम्-पूर्वत्यागः) इत्यादिवचनात् स एव सिद्धिगमनसमय इत्यर्थः, तेन तस्मात् कारणात् प्रत्युत्पन्ननयमतमृजुसूत्रादिनिश्चयनयमतमाश्रित्य सिद्धिक्षेत्र गत्वा सिध्यति, बोन्दित्यागसमयसिद्धिगमनसमययोरेतन्मतेनैकत्वात् । अत एव तन्मतेनैवेहोक्तम्– 'तत्थ गंतूण सिज्झइ' इति ॥ ३१६०-३१६१ ॥ ॥२६८॥ विशेषा० भागः-२

अथ 'कि सिद्धालयपरओ' इत्याद्याः 'भवओ सिद्धो त्ति मई' इति पर्यन्ताः सप्तदश गाथाः पूर्वं षष्ठगणधरे लिखिताः, व्याख्याताश्च; इति नेह लिख्यन्त इति ॥ किं पुनस्तत् स्थान यत्र गत्वा सिध्यति ? इत्याह—

अत्थीसीपब्भारोवलक्खियं मणुयलोगपरिमाणं । लोगग्गनभोभागो सिद्धिक्खेत्तं जिणक्खायं ॥३१६२॥

( ईषत्प्राग्भारोपलक्षित मनुजलोकपरिमाणम् । लोकाग्रनभोभाग सिद्धिक्षेत्र जिनाख्यातम् ॥ ३१६२ ॥ )

गतार्था ॥ ३१६२ ॥ एतदेवाह—

'ईसी' इत्यादिका 'ओगाहणाई सिद्धे' इत्यादिगाथापर्यन्ताः पञ्चदश प्रायो निर्युक्तिगाथाः सुगमाः, मूलावश्यकटीकातश्च बोद्धव्या इति ॥ किमित्यवगाहनया सिद्धा भगवन्तोऽवगाहनायास्त्रिभागन्यूना भवन्ति ? इत्याह—

देहत्तिभागो सुसिरं तप्पूरणओ तिभागहीणो त्ति । सो जोगनिरोहे च्चिय जाओ सिद्धो वि तदवत्थो ॥ योगनिरोधे छिद्रपूरणाद् देहत्रिभागोनः

( देहत्रिभाग शुषिरं तत्पूरणतस्त्रिभागहीन इति । स योगनिरोध एव जात सिद्धोऽपि तदवस्थ ॥ ३१६३ ॥ )

देहस्य हृदयोदराद्यन्तः सच्छिद्रत्वात् तत्त्रिभाग. शुषिरो वर्तते, जीवप्रदेशैस्तत्पूरणाच्च निबिडताऽऽपादनात् सिद्धो भगवान् अवगाहनात्रिभागेन न्यूनो भवति । स च पूर्व योगनिरोधकाल एवेत्थभूतो जातः, ततः सिद्धोऽपि तदवस्थ एवेति ॥ ३१६३ ॥अथ प्रेर्यं परिहारं चाह–

संहारसंभवाओ पएसमेत्तम्मि किं न सठाइ ? । सामत्थाभावाओ सकम्मयाओ सहावाओ ॥ ३१६४ ॥

( संहारसंभवात् प्रदेशमात्रे कि न संतिष्ठते ? । सामर्थ्याभावात् सकर्मकत्वात् स्वभावात् ॥ ३१६४ ॥ )

ननु यदा स्वप्रदेशान् संहृत्य घनीभवति, तर्हीत्थं संहारसंभवात् तथा किं न संहरति यथैकस्मिन्नाकाशप्रदेशे संतिष्ठते ? । अत्रोत्तरमाह— तथाविधसामर्थ्याभावात्, तथा, योगनिरोधकालेऽद्यापि सकर्मकत्वात् जीवस्वाभाव्याच्च नोक्तादधिकं संहरतीति ॥ ३१६४ ॥

यदि पूर्वं सकर्मकत्वात् मैव संहरतु, सिद्ध सन् किं तथा न संहरति ? इत्याह–

सिद्धो वि देहरहिओ सपयत्ताभावओ न संहरइ। अपयत्तस्स किह गई, नणु भणियाऽसंगयाईहिं ॥३१६५॥

( सिद्धोऽपि देहरहितः स्वप्रयत्नाभावतो न संहरति। अप्रयत्नस्य कथं गतिर्ननु, भणिताऽसङ्गतादिभिः ? ॥ ३१६५ ॥ )

सिद्धोऽपि देहाभावे स्वप्रयत्नाभावाद् नैव संहरति। अप्रयत्नस्य कथं सिद्धक्षेत्रं यावद् गतिः ? इति चेत्। ननु भणितमत्रोत्तरम्– 'असङ्गत्वादिकारणैरसौ भवति' इति ॥ ३१६५ ॥ 'तिन्नि सया तेत्तीसा' इत्यादिना योत्कृष्टाद्यवगाहना भणिता, सा कस्य द्रष्टव्या ? इत्याह–

जेट्ठा उ पंचसयधणुस्स मज्झा य सत्तहत्थस्स। देहत्तिभागहीणा जहन्निया जा बिहत्थस्स ॥३१६६॥

( ज्येष्ठा तु पञ्चशतधनुषो मध्या च सप्तहस्तस्य। देहत्रिभागहीना जघन्यिका या द्विहस्तस्य ॥ ३१६६ ॥ )

पाठसिद्धा ॥ ३१६६ ॥ अत्र विनेयप्रश्नमुत्तरं चाह–

कह मरुदेवीमाणं नाभीओ जेण किंचिदूणा सा। तो किर पंच सय च्चिय अहवा संकोयओ सिद्धा ॥३१६७॥

( कथं मरुदेवीमानं नाभितो येन किञ्चिदूना सा। ततः किल पञ्च शतान्येवाथवा संकोचतः सिद्धा ॥ ३१६७ ॥ )

ननु मरुदेवीसिद्धस्य कथं 'तिन्नि सया तेत्तीसा' इत्यादि मानं घटते ? । सा हि नाभिकुलकरपत्नी, नाभेश्च पञ्चविंशत्यधिकानि पञ्चधनुःशतानि प्रमाणमागमे प्रोक्तम्, यदेव चास्य मानं तदेव मरुदेव्या अपि "संघयण संठाणं उच्चत्तं चेव कुलकरेहिं समं" इति वचनात्। ततस्तस्या देहमानस्य त्रिभागे पतिते सिद्धावस्थायां सार्धानि त्रीणि धनुःशतान्यवगाहना प्राप्नोतीति पृच्छतोऽभिप्रायः। अत्रोत्तरमाह– येन यस्माद् नाभिकुलकरमानात् प्रमाणतोऽसौ किञ्चिद् न्यूना। ततः किल पञ्चधनुःशतमानैवेत्यदोषः। 'कुलकरेहिं समं' इत्यतिदेशोऽपि न बाधकः, कियतापि न्यूनाधिक्येऽप्यतिदेशानामागमे दर्शनादिति। अथवा, हस्तिस्कन्धाधिरूढत्वात् संकोचतः संकुचिताङ्गी सिद्धेयमिति न यथोक्तावगाहनाविरोध इति ॥ ३१६७ ॥ अथ जघन्यावगाहनायां प्रेर्यं परिहारं चाह–

सत्तूसिएसु सिद्धी जहन्नओ कहमिहं बिहत्थेसु ?। सो किर तित्थयरेसुं सेसाणं सिज्झमाणाणं ॥३१६८॥

( सप्तोच्छ्रितेषु सिद्धिर्जघन्यतः कथमिह द्विहस्तेषु ?। स किल तीर्थकरेषु शेषाणां सिध्यताम् ॥ ३१६८ ॥ )

ननु जघन्यपदे सप्तहस्तोच्छ्रितेषु सिद्धिः सिद्धान्ते निर्दिष्टा, इह तु 'एगाइ होइ रयणी' (एकादिर्भवति हस्तः) इत्यादिवचनात् कथं द्विहस्तेष्वसौ प्रोच्यते ?। अत्र निर्वचनमाह– या सिद्धान्ते सप्तहस्तानां सिद्धिरुक्ता सा किल महावीरादितीर्थकरेषु द्रष्टव्या, इह तु द्विहस्तानां सिद्धिः शेषाणां सामान्यकेवलिनां सिध्यतां मन्तव्येति ॥ ३१६८ ॥ के पुनर्द्विहस्ताः सिध्यन्ति ? इत्याह–

ते पुण होज्ज बिहत्था कुम्मापुत्ताद‌ओ जहन्नेणं। अन्ने संवट्टियसत्तहत्थसिद्धस्स हीण त्ति ॥ ३१६९ ॥

( ते पुनर्भवेयुर्द्विहस्ताः कूर्मापुत्रादयो जघन्येन। अन्ये संवर्तितसप्तहस्तसिद्धस्य हीनेति ॥ ३१६९ ॥ )

उत्कृष्टतः ५००- धनुष्काः, मध्यमतः ७ हस्ताः, जघन्यतो द्विहस्तकाः सिध्यन्ति

ते न जघन्यतो द्विहस्ताः कूर्मापुत्रादयो द्रष्टव्याः। अन्ये तु वदन्ति–'सप्तहस्तोऽपि यन्त्रपीलनादिना संवर्तितः समाकोडितो यः सिध्यति तस्यात्र हीना जघन्यावगाहना प्रोक्तेति ॥ ३१६९ ॥ अथवा समाधानान्तरमाह— 

बाहुल्लाओ सुत्तम्मि सत्त पंच य जहन्नमुक्कोसं। इहरा हीणब्भहियं होज्जंगुल-धणुपुहत्तेहिं ॥३१७०॥

अच्छेरयाइं किंचि वि सामन्नसुए न देसिअं सव्वं। होज्ज व अणिवद्धं चिय पंचसयाएसवयणं व॥३१७१॥

( बाहुल्यात् सूत्रे सप्त पञ्च च जघन्यमुत्कृष्टम्। इतरथा हीनमधिकं भवेदङ्गुल धनुष्पृथक्त्वैः ॥ ३१७० ॥ )

( आश्चर्याणि किञ्चिदपि सामान्यश्रुते न देशित सर्वम्। भवेद् वाऽनिबद्धमेव पञ्चशतादेशवचनमिव ॥ ३१७१ ॥ )

व्याख्या– अथवा, बाहुल्यात् प्राचुर्याश्रयणात् सूत्रे सप्त हस्ताः सिद्धिं गच्छतो जघन्यं मानमुक्तम्, उत्कृष्टं तु पञ्च धनुःशतानि प्रमाणमभिहितम् ; इतरथा कादाचित्क जघन्यपदेऽङ्गुलपृथक्त्वैः, उत्कृष्टपदे धनुष्पृथक्त्वैर्हीनमभ्यधिकं वा तद् भवेदेवेति न कूर्मापुत्र-मरुदेव्यादिभिः कश्चिद् विरोध इति। आश्चर्यादिकं च किञ्चित् सामान्यश्रुते सर्वं न देशितं न भणितम्, पञ्चशतादेशवचनवदिति ॥ ३१७०-३१७१ ॥

यदुक्तम्–'संठाणमणित्थंथं' (नि० गा०) इति, तद्व्याख्यानमाह—

सुसिरपरिपूरणाओ पुव्वागारन्नहावत्थाओ। संठाणमणित्थंथं जं भणियं अणिययागारं॥ ३१७२॥ 

एत्तो च्चिय पडिसेहो सिद्धाइगुणेसु दीहयाईणं। जमणित्थंथं पुव्वागारावेक्खाए नाभावो॥ ३१७३॥

( शुषिरपरिपूरणात् पूर्वाकारान्यथाव्यवस्थात। संस्थानमनित्थंस्थं यद् भणितमनियताकारम् ॥ ३१७२ ॥ )

( एतस्मादेव प्रतिषेध सिद्धादिगुणेषु दीर्घतादीनाम्। यदनित्थंस्थ पूर्वाकारापेक्षया नाभाव ॥ ३१७३ ॥ )

व्याख्या– शुषिरपरिपूरणात्, पूर्वाकारस्यान्यथाव्यवस्थापनात् सिद्धसंस्थानमित्थमनेन प्रकारेण तिष्ठतीति इत्थंस्थं न तथाऽनित्थंस्थमनियताकारमिति यदुक्तं भवति अनियताकारमित्युक्तं भवतीत्यर्थः। अत एव सिद्धस्यादेरारभ्य गुणाः सिद्धादिगुणास्तेषु प्रतिपाद्यमानेषु "से न दीहे न हस्से न वट्टे" इत्यादिवचनेनागमे दीर्घत्वादीनां प्रतिषेधः कृतः। आह–यद्येवम्, सिद्धसंस्थानमभाव' प्राप्नोति, दीर्घत्वादिगुणैर्व्यपदेष्टुमशक्यत्वात्, खरविषाणवदिति। नैतदेवम्, यस्मात् तदनित्थंस्थं पूर्वाकारापेक्षया भण्यते, स हि मूर्तत्वाद् दीर्घादिगुणैर्व्यपदिश्यते, न तु सिद्धजीव', अमूर्तत्वात्। न चैतावता तत्संस्थानमभावः, मूर्तगुणानां दीर्घत्वादीनामभावेऽप्यमूर्तगुणानां ज्ञानादीनां तत्र सद्भावादिति। ॥ ३१७२-३१७३ ॥ अत्र प्रेर्य-परिहारौ प्राह—

नामुत्तस्सागारो विन्नाणस्सेव, न कुंभनभसो व्व। दिट्ठो परिणामवओ नेयागारं च विन्नाणं ॥३१७४॥ 

( नामूर्तस्याकारो विज्ञानस्येव, न कुम्भनभस इव। दृष्ट परिणामवतो ज्ञेयाकारं च विज्ञानम् ॥ ३१७४ ॥ )

नतु यदि सिद्धजीवोऽमूर्तस्तर्हि तस्यानित्यस्थसस्थानरूपो यः कोऽप्याकारो भवद्भिरिष्यते स न प्राप्नोति, अमूर्तत्वादेव, विज्ञानस्येवेति । सूरिराह– नैतदेवम्, यतो दृष्टः, परिणामवतोऽमूर्तस्याप्याकारः, यथा कुम्भनभसः–घटाकाशस्येत्यर्थः । इह यत् परिणामवत् तस्याकारो दृष्टः, यथा घटपरिच्छिन्नस्याकाशस्य घटाकारः परिणामवांश्च सिद्धजीवः, ततस्तस्याप्यनन्तरभवशरीरपरिच्छिन्नस्यास्त्युपाधिमात्रेण शरीराकारः । विज्ञानस्यापि दृष्टान्तत्वेनोपन्यस्तस्य निराकारत्वमसिद्धम्, यतो ज्ञेयाकारं विज्ञानमिष्यत एव, अन्यथा नीलज्ञानादपि पीतादिसमस्तवस्तुपरिच्छेदप्रसङ्गात्, नीलस्यापि वाऽपरिच्छेदापत्तेः, निराकारत्वाविशेषादिति ॥ ३१७४ ॥

इतोऽपि ज्ञानं साकारम् । कुतः ? इत्याह—

ज्ञानस्य साकारत्वसिद्धिः

**जीवाणन्नं च जओ देहागारो य सो तहा तं पि । परिमियवत्थुत्तणओ जुत्तं कुंभो व सागारं ॥३१७५॥**

(जीवानन्यच्च यतो देहाकारश्च स तथा तदपि । परिमितवस्तुत्वतो युक्तं कुम्भ इव साकारम् ॥ ३१७५ ॥)

यतश्च यस्माद् जीवादनन्यदभिन्नं विज्ञानम्, स च जीवो देहेन सर्वतः परिच्छिन्नत्वाद् देहाकार एष्टव्यः, तथा तेनैव प्रकारेण तदपि विज्ञानं परिमितवस्तुत्वाद् देहपरिच्छिन्नवस्तुत्वात् कुम्भवत् साकारं युक्तम्, न तु निराकारमिति ॥ ३१७५ ॥

ननु यत्रैकः सिद्धस्तत्र किमन्येऽपि भवन्ति, उत देशभेदतस्तिष्ठन्ति ? इत्यत्र निर्युक्तिकारः प्राह—

यत्रैकस्तत्रानन्ताः सिद्धाः

**जत्थ य एगो सिद्धो तत्थ अणंता भवक्खयविमुक्का । अन्नोन्नसमोगाढा पुट्ठा सव्वे वि लोगंते॥३१७६॥**

(यत्र चैकः सिद्धस्तत्रानन्ता भवक्षयविमुक्ताः । अन्योन्यसमवगाढाः स्पृष्टाः सर्वेऽपि लोकान्ते ॥ ३१७६ ॥)

पाठसिद्धा ॥ ३१७६ ॥ स्पर्शना तेषां परस्परं कथम् ? इत्यत्र प्रश्ने निर्युक्तिकार एवाह—

**फुसइ अणंते सिद्धे सव्वपएसेहिं नियमसो सिद्धो । ते वि असंखिज्जगुणा देसपएसेहिं जे पुट्ठा॥३१७७॥**

(स्पृशत्यनन्तान् सिद्धान् सर्वप्रदेशैर्नियमतः सिद्धः । तेऽप्यसंख्येयगुणा देशप्रदेशैर्ये स्पृष्टाः ॥ ३१७७ ॥)

स्पृशत्यनन्तान् सिद्धान् सर्वप्रदेशैरात्मसम्बन्धिभिर्नियमात् सिद्ध इति । तथा तेऽपि सर्वप्रदेशस्पृष्टेभ्योऽसंख्येयगुणा वर्तन्ते देशप्रदेशैर्ये स्पृष्टाः, कथम् ? इति चेत् । उच्यते– सर्वप्रदेशैस्तावदनन्ताः स्पृष्टाः एवमेकैकेनापि जीवस्य देशेन प्रदेशेन चानन्ताः स्पृष्टाः, जीवश्चासंख्येयदेशप्रदेशात्मकः, ततश्च मूलानन्तकं सकलजीवदेश प्रदेशाऽसंख्येयकेन गुणितं यथोक्तमेव भवतीति ॥ ३१७७ ॥

अथ यदुक्तम्–'सठाणमणित्थथं जरामरणविप्पमुक्काणं' (नि०गा०) इति, तत्र परः प्राह—

जीवनविरहाज्जरामरणविमुक्ताः सिद्धाः

**न जरा-मरणविमुक्का जीवत्तणओ मइ मणुस्सो व्व । नहि जीवणविरहाओ न जीवणं कम्मविरहाओ३१७८**

(न जरा मरणविमुक्ता जीवत्वतो मतिर्मनुष्य इव । नहि जीवनविरहाद् न जीवनं कर्मविरहात् ॥ ३१७८ ॥

न जरा-मरणविमुक्ताः सिद्धा इति प्रतिज्ञा, जीवत्वादिति हेतुः, मनुष्यवदिति दृष्टान्तः 'मइ त्ति' इति परस्य मतिर्भवेत् । सूरिराह-नहि-नैवेदम्, हेतोरसिद्धत्वात् । तदसिद्धत्वं च प्राणधारणलक्षणस्य जीवनस्य तेषु विरहादभावात् ; जीवनाभावश्च कर्मविरहादिति ॥३१७८॥

इति परोपन्यस्तहेतुं निराकृत्य स्वपक्षसिद्ध्यर्थं युक्तिमाह-

वयसो हाणीह जरा पाणच्चाओ य मरणमाइट्ठं । सइ देहम्मि तदुभयं तदभावे तं न खस्सेव ॥३१७९॥

( वयसो हानिरिह जरा प्राणत्यागश्च मरणमादिष्टम् । सति देहे तदुभयं तदभावे तद् न खस्येव ॥ ३१७९ ॥ )

'जृ वयोहानौ' इति धातुपाठाद् वयसो हानिरिह जरा प्रसिद्धा, प्राणत्यागश्च मरणमादिष्टम् । इद च द्वितयमपि देहे सत्येव दृष्टम् । ततश्च तदभावे तदुभयमपि खस्याकाशस्येव सिद्धाना नास्तीति ॥३१७९॥ अथ 'फुसइ अणते सिद्धे' (गा०-३१७७) इत्यादिगाथाभावनामाह-

एगक्खेत्तेऽणंता पएसपरिवुड्ढि-हाणिओ तत्तो । होंति असंखेज्जगुणासंखपएसो जमवगाहो ३१८०

(एकक्षेत्रेऽनन्ता प्रदेशपरिवृद्धि हानितस्तत । भवन्त्यसङ्ख्येयगुणा असङ्ख्यप्रदेशो यदवगाह ॥ ३१८० ॥ )



एकस्य सिद्धस्य यदवगाहनाक्षेत्र तत्रैकस्मिन्नपि परिपूर्णेऽवगाढा अन्येऽप्यनन्ताः सिद्धाः प्राप्यन्ते, अपरे तु ये तस्य क्षेत्रस्यैकैक प्रदेशमाक्रम्यावगाढास्तेऽपि प्रत्येकमनन्ताः । एव द्वि-त्रि चतु-ष्पञ्चादिप्रदेशवृद्ध्या येऽवगाढास्तेऽपि प्रत्येकमनन्ताः । तथा, तस्य मूलक्षेत्रस्यैकैकं प्रदेशं परित्यज्य येऽवगाढास्तेऽपि प्रत्येकमनन्ताः । एव द्वि त्रि-चतु-ष्पञ्चादिप्रदेशहान्या येऽवगाढास्तेऽपि प्रत्येकमनन्ताः । एव च सति प्रदेशपरिवृद्धि हानिभ्या ये समवगाढास्ते 'तत्तो' त्ति, तेभ्यः परिपूर्णक्षेत्रावगाढेभ्योऽसंख्येयगुणा भवन्ति, यद् यस्मादसङ्ख्येयप्रदेशात्मक एकस्य सिद्धस्यावगाह', प्रतिप्रदेश चानन्ता. समवगाढा इति दर्शितमेव । ततो मूलानन्तकेऽसङ्ख्येयैः प्रदेशैर्गुणिते समस्तानामसंख्येयगुणत्व सिद्धम् ॥ ३१८० ॥ अत्राक्षेप-परिहारावाह—

एगक्खेत्तेऽणंतो किह माया, मुत्तिविरहियत्ताओ । नेयम्मि व नाणाइं दिट्ठीओ वेगरूवम्मि ॥३१८१॥

मुत्तिमयामवि य समाणदेसया दीसए पईवाणं । गम्मइ परमाणूण य मुत्तिविमुक्केसु का संका ? ३१८२

( एकक्षेत्रेऽनन्ता कथं माता , मूर्तिविरहितत्वात । ज्ञेय इव ज्ञानानि दृष्टयो वैकरूपे ॥ ३१८१ ॥ )

( मूर्तिमतामपि च समानदेशता दृश्यते प्रदीपानाम् । गम्यते परमाणूनां च मूर्तिविमुक्तेषु का शङ्का ? ॥ ३१८२ ॥ )

प्रकटार्थे, नवर 'मुत्तिमये'त्यादि, मूर्तिमतामपि प्रदीपप्रभापुद्गलानामित्यर्थः ॥ इति विशतिगाथार्थ. ॥ ३१८१-३१८२ ॥

'असरीर-' इत्यादि नियुक्तिगाथाद्वयं सुगमम, प्रायो गतार्थ च । 'सुत्तो करणाभावे-' इत्यादिकास्तु 'गुरुरुपरत' इत्यादिगाथापर्यन्ता नव गाथा पूर्वोक्तस्वरूपार्थे व्याख्याता इति नेह लिख्यन्ते । 'न वि अत्थि माणुसाणं' इत्यादिकास्तु 'इय सव्वकाल-' इत्यादि

गाथापर्यन्ताः सप्त निर्युक्तिगाथाः सुगमाः, आवश्यके व्याख्याताश्चेति ॥

अथ 'जह सव्वकामगुणियं'-इत्यादिगाथाया सिद्धसुखे यत् पुरुषोदाहरणमुक्तम्, तत्राह—

**तेसिं सिद्धत्तं पिव सोक्खमसाहारणं तओऽणुवमं। देसोवणयाओ पुण पुरिसोदाहरणमक्खायं ३१८३**

(तेषां सिद्धत्वमिव सौख्यमसाधारणं ततोऽनुपमम्। देशोपनयात् पुनः पुरुषोदाहरणमाख्यातम् ॥३१८३॥)

सुगमा ॥ ३१८३ ॥

**जइवा संसारे च्चिय होज्ज तयं, किंत्थ मोक्खचिंताए?। तव्विहमच्चंतसुहं जत्थ व, सो केण संसारो? ॥**

(यदि वा संसार एव भवेत् तत् किमत्र मोक्षचिन्तया?। तद्विधमनन्तसुखं यत्र वा स केन संसारः? ॥ ३१८४ ॥)

यदि पुनः संसारेऽपि कस्यापि सर्वथा तत् सिद्धसुखसदृशं सुखं भवेत्, तत् किमत्र मोक्षचिन्तया, तत्सुखस्येहापि प्राप्तेः ?। अथवा, यत्र तद्विध सिद्धसुखप्रकारमात्यन्तिकं सुखं प्राप्यते स केन हेतुना संसारो भण्यते? ननु मोक्ष एवासौ, न चैवम्। तस्माद् देशसाम्येनैव पुरुषोदाहरणं द्रष्टव्यमिति ॥ ३१८४ ॥ तस्माद् निरुपममेव सिद्धिसुखमिति दर्शयन्नाह—

**अतुलमणन्नसरिसयं निव्वाणं निव्वुई परं सोक्खं। अन्नेसिं निव्वाणं दीवस्स व सव्वहा नासो।३१८५**

(अतुलमनन्यसदृशकं निर्वाणं निर्वृतिः परं सौख्यम्। अन्येषां निर्वाणं दीपस्येव सर्वथा नाशः ॥ ३१८५ ॥)

अतुलमनन्यसदृशं निर्वाणं निर्वृतिः परं प्रकर्षप्राप्तं सौख्यमुच्यते, न पुनस्तस्य दृष्टान्तः कोऽप्यस्तीति भावः। अन्येषां तु मतेन दीपस्येव जीवस्य सर्वथा नाशो निर्वाणमुच्यत इति, सर्वथा नष्टे प्रदीपे निर्वाणशब्दरूढेर्जीवस्य सर्वथा नाशो निर्वाणमन्येषामभिप्रेतम् ॥३१८५॥

युक्तिं च तेऽत्र, प्राहुः—

**जं च तणु-कम्मसंतइनासो बीयंकुराण वा मोक्खो। अन्नो न य संताणी संताणाओ तओ नासो ॥ ३१८६**

**जं नारगाइभावो भवो व न य नारगाइओ भिन्नो। कोई जीवो तो नारगाइनासम्मि तन्नासो ॥३१८७॥**

(यच्च तनु कर्मसंततिनाशो बीजाऽङ्कुरयोरिव मोक्षः। अन्यो न च संतानी संतानात् ततो नाशः ॥ ३१८६ ॥)

(यद् नारकादिभावो भव एव न च नारकादितो भिन्नः। कोऽपि जीवस्ततो नारकादिनाशे तन्नाशः ॥ ३१८७ ॥)

व्याख्या– यस्माच्च बीजाऽङ्कुरयोरिव तनुकर्मणोर्या संततिः संतानस्तन्नाशो मोक्ष इष्यते भवद्भिः, न चास्मात् संतानाद् व्यतिरिक्तः संतानी जीवो दृश्यते। ततश्च ननु कर्मसंततिविनाशे जीवस्यापि तद्वदेव नाशात् सर्वनाश एव मोक्षो युज्यत इति। 'भवो व' त्ति वाशब्दश्चशब्दार्थे। यस्माद् भवश्च संसारो नारक-तिर्यग्-नराऽमररूपेण भाव एवोच्यते नापरः, न च नारकादिभ्यो भिन्नो जीवः कोऽपि दृश्यते, ततो नारका-

दिनाशे नारकादिभावरूपभवविनाश इत्यर्थः, 'तन्नासो त्ति' नारकाद्यव्यतिरिक्तत्वात् तस्यापि जीवस्य सर्वथा नाश एव युज्यत इत्यर्थः ॥ ॥ ३१८६ ३१८७ ॥ अमुमेवार्थं दृष्टान्तोपन्यासेन समर्थयन्नाह—

जह तंतुमओ पडओ तंतुविणासम्मि सव्वहा नत्थि। तह नारगाइमइओ जीवो तदभावओ नत्थि ॥

( यथा तन्तुमय पटकस्तन्तुविनाशे सर्वथा नास्ति। तथा नारकादिमयो जीवस्तदभावतो नास्ति ॥ ३१८८ ॥ )

प्रकटार्था ॥ इति गाथापट्कार्थः ॥ ३१८८ ॥ 'न हि नारगाइ' इत्यादिकास्तु 'कयगाइभावओ' इत्यादिगाथापर्यन्ता एकोनत्रिंशद्गाथाः पूर्वमेकादशादिगणधरवादे व्याख्याताः ॥ 'सिद्ध त्ति य' इत्यादिकास्तु षड् निर्युक्तिगाथाः, सुगमाश्चेति ॥

## ॥ इति सिद्धनमस्कारः समाप्तः ॥

अथाचार्यनमस्कारमभिधित्सुराह—

आचार्य-नमस्कारः

नामं ठवणा दविए भावे य चउव्विहो य आयरिओ। दव्वम्मि एगभवियाइ लोईए सिप्पसत्थाई ॥३१८९॥
पंचविहं आयारं आयरमाणा तहा पयसेंता। आयारं दंसेंता आयरिया तेण वुच्चंति ॥ ३१९० ॥

( नाम स्थापना द्रव्ये भावे च चतुर्विधश्चाचार्यः द्रव्य एकभविकादिर्लौकिके शिल्पशास्त्रादि ॥ ३१८९ ॥ )
( पञ्चविधमाचारमाचरन्तस्तथा प्रभाषमाणा। आचारं दर्शयन्त आचार्यास्तेनोच्यन्ते ॥ ३१९० ॥ )

इह नाम स्थापने सुगमे ॥ ३१८९-३१९० ॥ द्रव्यविचारे पुनराह—

द्रव्याचार्यः

आगमदव्वायरिओ आयारवियाणओ अणुवउत्तो। नोआगमओ जाणय-भव्वसरीराइरित्तोऽयं ॥
भविओ बद्धाऊ अभिमुहो य मूलाईनिम्मिओ वावि। अहवा दव्वब्भूओ दव्वनिमित्तायरणओ वा ॥

( आगमद्रव्याचार्य आचारविज्ञानादनुपयुक्त। नोआगमतो ज्ञायक भव्यशरीरातिरिक्तोऽयम् ॥ ३१९१ ॥ )
( भविको बद्धायुरभिमुखश्च मूलादिनिर्मितो वापि। अथवा द्रव्यभूतो द्रव्यनिमित्ताचरणतो वा ॥ ३१९२ ॥ )

व्याख्या—ज्ञशरीर-भव्यशरीरव्यतिरिक्तस्त्वाचार्योऽयम्। कः? इत्याह—'भविओ' इत्यादि, एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्चेत्यर्थः, 'मूलाईनिम्मिओ वावि'त्ति, तथा मूलगुणनिर्मित उत्तरगुणनिर्मितश्च तद्व्यतिरिक्तो द्रव्याचार्यो मन्तव्यः। तत्र मूलगुणनिर्मित आचार्यशरीरनिर्वर्तनयोग्यानि द्रव्याणि, उत्तरगुणनिर्मितस्तु तान्येव तदाकारपरिणतानीति। अथवा, द्रव्यभूतोऽप्रधान आचार्यस्तद्व्यतिरिक्तो द्रव्याचार्यः प्रतिपाद्यते। यो वा द्रव्यनिमित्तेनाचरति चेष्टते स द्रव्यनिमित्ताचरणाद् द्रव्याचार्य। स च(प्र० ..च लौकिको) लौकिकमार्गे

शिल्पशास्त्रादिर्विज्ञेयः, यः शिल्पानि निमित्तादिशास्त्राणि च ग्राहयति स इहोपचारतः शिल्पशास्त्रादिरुक्तः । अन्ये त्विमं शिल्पशास्त्राचार्यं लौकिकं भावाचार्यं व्याचक्षते । शेषं सुगममिति ॥ ३१९१-३१९२ ॥ 'पचविह' इत्यादिना लोकोत्तरो भावाचार्य उक्तः, तत्स्वरूपव्याख्यानार्थमाह—

आ मज्जायावयणो चरणं चारो त्ति तीए आयारो । सो होइ नाण-दंसण-चरित्त-तव-वीरियवियप्पो ॥३१९३॥
तस्सायरण-पभासण-दंसण(प्र० देसण)ओ देसिया विमोक्खत्थं । जे ते भावायरिया भावायारोवउत्ता य ॥
अहवायरंति जं सयमायारेंति व जमायरिज्जंति । मज्जायया भिगम्मंति जमुत्तं तेणमायरिआ ॥ ३१९५ ॥

( आ मर्यादावचनश्चरणं चार इति तयाऽऽचार । स भवति ज्ञान-दर्शन चारित्र-तपो-वीर्यविकल्प ॥ ३१९३ ॥ )
( तस्याचरण प्रभापण-दर्शनतो देशितारो विमोक्षार्थम् । ये ते भावाचार्या भावाचारोपयुक्ताश्च ॥ ३१९४ ॥ )
( अथवाचरन्ति यत् स्वयमाचरयन्ति वा यदाचर्यन्ते । मर्यादयाऽभिगम्यन्ते यदुक्त तेनाचार्या ॥ ३१९५ ॥ )

पाठसिद्धा एव, नवरं 'तीए त्ति' तया मर्यादया चरणमाचारः । 'तस्से'त्यादि तस्य पञ्चविधस्याचारस्य स्वयमाचरणतः, परेषां च प्रभापणतः, तथा, विनेयानां वस्तु(प्र० वस्त्र)प्रत्युपेक्षणादिक्रियाविधेर्दर्शन(प्र० देशन)तो ये परात्मनो मोक्षार्थं 'देसिय त्ति' देशितारस्ते भावाचारोपयुक्तत्वाद् भावाचार्या इति । अथवा, स्वयं यस्मादाचरन्ति सदनुष्ठानम्, आचारयन्ति (प्र० आचरयन्ति) चान्यैः, अथवा, आचर्यन्ते मर्यादयाऽभिगम्यन्ते यतो मुमुक्षुभिरिति यदुक्तम्—एतत् तात्पर्यमित्यर्थः, तेनाचार्याः ॥ इति गाथासप्तकार्थः ॥ ३१९२ तः ३१९५ ॥

'आयरिया' इत्यादिचतस्रो निर्युक्तिगाथा' प्रागुक्तानुसारेण व्याख्येयाः ॥

## ॥ इत्याचार्यनमस्कारः समाप्तः ॥

उपाध्याय-नमस्कारः

अथोपाध्यायनमस्कारमभिधित्सुराह—

नामं ठवणा दविए भावे य चउव्विहो उवज्झाओ । दव्वे लोइयसिप्पा धम्मे तह अन्नतित्थीया ३१९६

( नाम स्थापना द्रव्ये भावे च चतुर्विध उपाध्याय । द्रव्ये लौकिकशिल्पाद् धर्मे तथाऽन्यतीर्थीया ॥ ३१९६ ॥ )

नाम स्थापनोपाध्यायौ सुबोधौ । द्रव्योपाध्यायास्तु ज्ञ-भव्यशरीरव्यतिरिक्तानाह— 'द्रव्य' इत्यादि, द्रव्ये विचार्ये तद्व्यतिरिक्त उपाध्यायः शिल्पाद्युपदेष्टा; तथा, 'धम्मे' त्ति, निजनिजधर्मोपदेष्टारोऽन्यतीर्थिकाश्च संसारनिबन्धनत्वेनाप्रधानभूतत्वात् तद्व्यतिरिक्तद्रव्योपाध्याया मन्तव्या इति ॥ ३१९६ ॥ भावोपाध्यायानाह—

बारसंगो जिणक्खाओ सज्झाओ कहिओ बुहे । तं उवइसंति जम्हा उज्झाया(प्र० उवज्झाया) तेण वुच्चंति ३१९७ ।

( द्वादशाङ्गो जिनाख्यात स्वाध्याय कथितो बुधै । तमुपदिशन्ति यस्मादुपाध्यायास्तेनोच्यन्ते ॥ ३१९७ ॥ )

यो द्वादशाङ्गः स्वाध्यायः प्रथमतो जिनैराख्यातः, ततो 'बुहे' त्ति प्राकृतत्वाद् बुधैर्गणधरादिभिः कथितः पारम्पर्येणोपदिष्टः, त स्वाध्याय सूत्रतः शिष्याणामुपदिशन्ति, यस्मात्, तेनोपाध्याया उच्यन्ते । अत एव 'इङ् अध्ययने' उपेत्य सूत्रमधीयते येभ्यः शिष्यैस्ते उपाध्याया भण्यन्त इति ॥ ३१९७ ॥ साम्प्रतमागमशैल्याऽक्षरार्थमधिकृत्योपाध्यायशब्दार्थमाह—



त्ति उवओगकरणे झत्ति य ज्झाणस्स होई निद्देसे। एएण होइ उज्झा एसो अण्णो वि पज्जाओ॥ ३१९८॥

( उरित्युपयोगकरणे झेति च ध्यानस्य भवति निर्देशे। एतेन भवत्युज्झा एषोऽन्योऽपि पर्याय. ॥ ३१९८ ॥ )

'उ' इत्येतदक्षरमुपयोगकरणे वर्तते 'झा' इति चेद ध्यानस्य निर्देशे । ततश्च प्राकृतशैल्यैतेन कारणेन भवन्ति 'उज्झा' उपयोगपुरस्सर ध्यानकर्तार इत्यर्थः । एषोऽनन्तरोक्तोपाध्यायशब्दापेक्षयाऽन्योऽपि पर्याय इति ॥३१९८॥ अथोपाध्यायशब्दार्थं भाष्यकारः प्राह—

उवगम्म जओऽहीयइ जं चोवगयमज्झयाविंति। जं चोवायज्झाया हियस्स तो ते उवज्झाया॥३१९९॥

( उपगम्य यतोऽधीयते यच्चोपगतमध्यापयन्ति । यच्चोपायध्यायका हितस्य ततस्त उपाध्यायाः ॥ ३१९९ ॥ )

उपगम्योपेत्य यतो येभ्योऽधीयते पठन्ति शिष्यास्त उपाध्यायाः, यच्च यस्मादुप समीपे गतं प्राप्तं शिष्यमध्यापयन्ति तत उपाध्यायाः, यस्माच्च स्वपरहितस्योपायध्यायकाः उपायचिन्तकास्ततस्त उपाध्याया इति ॥ ३१९९ ॥ आचार्योपाध्याययोर्भाष्यकारो विशेषमाह—

आयारदेसणाओ आयरिया विणयणादुवज्झाया। अत्थपदायगा वा गुरवो सुत्तस्सुवज्झाया ॥३२००॥

( आचारदेशनादाचार्या विनयनादुपाध्यायाः । अर्थप्रदायका वा गुरव सूत्रस्योपाध्यायाः ॥ ३२०० ॥ )

स्पष्टार्थंव । इति गाथापञ्चकार्थः ॥ ३२०० ॥ 'उवज्झाया' इत्यादिचतस्रो गाथाः पूर्ववत् ॥

॥ इत्युपाध्यायनमस्कारः समाप्तः ॥

साधुनमस्कारे दश निर्युक्तिगाथाः सुगमाः, गतार्थाश्चेति ॥ तदेवमत्रमितं वस्तुद्वारम् ॥ अथाक्षेपद्वारं वक्तव्यम्, तत्र परः प्राह—

साधु-नमस्कारः

आक्षेपद्वारम्

वि संखेवो न वित्थारो संखेवो दुविहो सिद्ध-साहूणं। वित्थरओऽणेगविहो पंचविहो न जुज्जए तम्हा ॥

सिद्धसाधु-नमस्कार-द्वयमेव कथं न ?

( नापि सक्षेपो न विस्तर संक्षेपो द्विविध सिद्ध-साधुभ्याम् । विस्तरतोऽनेकविध पञ्चविधो न युज्यते तस्मात् ॥ ३२०१ ॥ )

इह हि एष सक्षेप विस्तरावतिक्रम्य न वर्तते । तत्र सक्षेपवद् यथा सामायिकसूत्रम्, विस्तरवद् यथा चतुर्दश पूर्वाणि । इद पुनर्नमस्कारसूत्रमुभयातीतम्, यतोऽत्र न सक्षेपो नापि विस्तर ; तथा 'संखेवो दुविहो' त्ति यद्यय सक्षेपः स्यात् तदस्मिन् सति द्विविध एव नमस्कारो भवेत् सिद्ध-साधुभ्यामिति, परिनिर्वाणादीनां सिद्धशब्देन ग्रहणात्, संसारिणां तु साधुशब्देनेति । संसारिणो, यदर्हदा

ऽऽचार्यादयो न साधुत्वमतिवर्तन्ते । अथाऽस्य विस्तरतः, तदप्ययुक्तम्, यतो विस्तरतोऽनेकविधो नमस्कारः प्राप्नोति; तथाहि– ऋषभा-ऽजित-
सम्भवादिभ्यो नामग्राहं सर्वतीर्थकरेभ्यः, तथा, सिद्धेभ्योऽप्येक द्वि-त्रि-चतुष्पञ्चादिसमयसिद्धेभ्यो यावदनन्तसमयसिद्धेभ्यः, तथा, तीर्थ
लिङ्ग प्रत्येकबुद्धादिविशेषणविशिष्टेभ्य इत्यादिभिर्भेदैर्विस्तरतोऽनन्तभेदो नमस्कारः प्राप्नोति । यतश्चैवम्, तस्मादमुं पक्षद्वयमप्यङ्गीकृत्य
पञ्चविधोऽयं नमस्कारो न युज्यते ॥ ३२०१ ॥

## ॥ तदेवमुक्तमाक्षेपद्वारम् ॥

अथ प्रसिद्धिद्वारम् । तत्र प्रसिद्धिराक्षेपस्य प्रतिविधानमभिधीयते । इह चेदं प्रतिविधानम्– 'न सक्षेपो नापि विस्तरतः' इत्येतदसिद्धम्,
सक्षेपत्वादस्य । अथ संक्षेप कारणवशात् कृतार्था-ऽकृतार्थपरिग्रहेण सिद्ध-साधुमात्रक एवोक्त इति चेत् । तदयुक्तम्, कारणान्तरस्यापि
सद्भावात् ; तथा चाह –

अरिहंताई नियमा साहू साहू उ तेसु भइयव्वा । तम्हा पंचविहो खलु हेउनिमित्तं हवइ सिद्धो ॥३२०२॥

(अर्हदादयो नियमात् साधव साधवस्तु तेषु भक्तव्या । तस्मात् पञ्चविध खलु हेतुनिमित्त भवतु सिद्ध ॥ ३२०२ ॥)

इहार्हदादयो नियमात् साधवः, तद्गुणानामपि तत्र भावात्, साधवस्तु तेष्वर्हदादिषु भक्तव्या विकल्पनीया., यतस्ते न सर्वेऽप्यर्ह-
दादय, किं तर्हि ?; केचिदर्हन्त., येषां तीर्थकरनामकर्मोदयोऽस्ति, केचित् तु सामान्यकेवलिनः अन्ये त्वाचार्या विशिष्टसूत्रार्थदेशकाः,
अपरे तूपाध्यायाः सूत्रपाठकाः, अन्ये त्वेतदविशिष्टा सामान्यसाधव एव शैक्षकादय.(प्र० शिक्षकादयो) न पुनरर्हदादय. । तदेवं साधूनाम-
र्हदादिषु व्यभिचारात् तन्नमस्करणेऽपि नार्हदादिनमस्कारसाध्यस्य विशिष्टफलस्य सिद्धि. । ततश्च सक्षेपेण द्विविधनमस्कारकरणमयुक्तमेव
अव्यापकत्वादिति, अत्र प्रयोग –साधुमात्रनमस्कारो विशिष्टार्हदादिगुणनमस्कृतिफलप्रापणसमर्थो न भवति, तत्सामान्याभिधाननमस्कार-
त्वात्, मनुष्यमात्रनमस्कारवत्, जीवमात्रनमस्कारवद् वेति । तस्मात् सक्षेपतोऽपि पञ्चविध एव नमस्कारो न तु द्विविधः, अव्यापकत्वात्,
विस्तरतस्तु नमस्कारो न विधीयते, अशक्यत्वात् । तथा, 'मग्गे अविप्पणासो' इत्यादिको यः पूर्वं पञ्चविधो हेतुरुक्तस्तन्निमित्तमप्ययं पञ्च-
विध सिद्धो भवति ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ ३२०२ ॥ अथ भाष्यकार आक्षेपनिवरणमाह—

निव्वुय-संसारिकयाकयत्थलक्खणविहाणओ जुत्तो । संखेवनमुक्कारो दुविहोऽयं सिद्ध-साहूणं ॥३२०३॥

उसभाईणमणंतरसिद्धाईणं जिणाइयाणं च । वित्थरओ पंचविहो नवि संखेवो न वित्थारो ॥ ३२०४ ॥

(निर्वृत संसारिकृताकृतार्थलक्षणविधानतो युक्त । सक्षेपनमस्कारो द्विविधोऽयं सिद्ध-साधूनाम् ॥ ३२०३ ॥)

(ऋषभादीनामनन्तरसिद्धादीनां जिनादिकानां च । विस्तरत पञ्चविधो नापि सक्षेपो न विस्तार ॥ ३२०४ ॥)

साधवः सर्वे न तीर्थ-कृदादयः

गतार्थे ॥ ३२०३-३२०४ ॥ अथ प्रसिद्धिनिवरणमाह—

जइवि जइग्गहणाओ होइ कयं गहणमरुहयाईणं। तह वि न तग्गुणपूया जइगुणसामण्णपूयाओ ॥

रिणामसुद्धिहेऊ व पयत्तो सा य वज्झवत्थूओ। पायं गुणाहियाओ जा सा न तदूणगुणलब्भा ॥३२०६

इ मणुयाइग्गहणे होइ कयं गहणमरुहयाईणं। न य तव्विसेसबुद्धी तह जइसामण्णगहणम्मि ।३२०७

जइ एवं वित्थरओ जुत्तो तदणंतगुणविहाणाओ। भण्णइ तदसज्झमओ पंचविहो हेउभेयाओ ३२०८

मग्गोवएसणाई सोऽभिहिओ तप्पभेयओ भेओ। जह लावगाइभेओ दिट्ठो लवणाइकिरियाओ ।३२०९

(यद्यपि यतिग्रहणाद् भवति कृतं ग्रहणमर्हदादीनाम्। तथापि न तद्गुणपूजा यतिगुणसामान्यपूजात ॥ ३२०५ ॥)
(परिणामशुद्धिहेतोर्वा प्रयत्न सा च बाह्यवस्तुन। प्रायो गुणाधिकाद् या सा न तदूनगुणलभ्या ॥ ३२०६ ॥)
(यथा मनुजादिग्रहणे भवति कृतं ग्रहणमर्हदादीनाम्। न च तद्विशेषबुद्धिस्तथा यतिसामान्यग्रहणे ॥ ३२०७ ॥)
(यदि एवं विस्तरतो युक्तस्तदनन्तगुणविधानात। भण्यते तदसाध्यमत पञ्चविधो हेतुभेदात् ॥ ३२०८ ॥)
(मार्गोपदेशनादि सोऽभिहितस्तत्प्रभेदतो भेद। यथा लावकादिभेदो दृष्टो लवनादिक्रियात ॥ ३२०९ ॥)

एता अपि गतार्था एव, नवरं 'तह जई'त्यादि, तथा तेनैव प्रकारेण यतेः साधोः सामान्यं यतिसामान्यं तद्ग्रहणे सति नार्हदादिविशेषमती बुद्धिरुत्पद्यत इति। 'तदणंतगुणे'त्यादि, तेषामर्हदादीनां येऽनन्ता गुणा' प्रत्येक क्षेत्र काल जाति गोत्र प्रमाणा ऽऽकृति-वयः संयमादिविशेषरूपा उपादाय तत्. कृत्वा विधानाद् नमस्कारस्य करणादिति। 'जह लावगाई'त्यादि, यथा लावक प्लावक-पाचक-पाठक-याचकादीना लवन-प्लवन-पचन-पठन याचनादिक्रियातो भेदो दृष्टः ॥ इति गाथापञ्चकार्थः ॥ ३२०५ तः ३२०९ ॥ अथ क्रमद्वारविचारमाह—

क्रमद्वारम्

पुव्वाणुपुव्वि न कमो नेव य पच्छाणुपुव्विए स भवे। सिद्धाईआ पढमा बीयाए साहुणो आई ॥३२१०॥

(पूर्वानुपूर्व्या न क्रमो नैव च पश्चानुपूर्व्या स भवेत्। सिद्धादिका प्रथमा द्वितीयाया साधव आदौ ॥ ३२१० ॥)

इह क्रमस्तावद् द्विविध – पूर्वानुपूर्वी वा, पश्चानुपूर्वी चेति। अनानुपूर्वी किल क्रम एव न भवति, असमञ्जसत्वात्। तत्रायमर्हदादिक्रमः (प्र० .०द्विक्रम.) पूर्वानुपूर्वी न भवति, सिद्धानामादावनभिधानात्, एकान्तकृतकृत्यत्वेन, तथा, 'सिद्धाण नमोक्कारं काऊणम-रिहाइं तु सो लिंगइ' (सिद्धानां नमस्कारं कृत्वार्हदादि तु स गृह्णीयात्) इति वचनादर्हन्नमस्कारपूर्वेन च सिद्धानां प्रधानत्वात्, प्रधानस्य चादावेव पूर्वानुपूर्व्यामभिधानात्। तथा, नैव च पश्चानुपूर्व्येण क्रमो भवेत्, साधूनां प्रथममनभिधानात्। इदानीमत्रार्थे

हि साधनः । ततश्च तानादौ प्रतिपाद्य यदि पर्यन्ते सिद्धाभिधान स्यात् तदा भवेत् पश्चानुपूर्वी । तस्मात् प्रथमायाः सिद्धादित्वात्, द्वितीयायास्तु साध्यादित्वाद् नेयं पूर्वानुपूर्वी, नापि पश्चानुपूर्वी ॥ इति निर्युक्तिगाथार्थः ॥ ३२१० ॥ एतदेव भाष्यकारः प्राह—

**पच्छक्कमो व जइ संजयाइसिद्धावसाणो तो ।३२११।**
**जेण कयत्था सिद्धा न जिणा, सिद्धाइओ कमो जुत्तो । कयसिद्धनमुक्कारा करिंति सामाइयं सव्वे ।३२१२।**
**जं च जिणाण वि पुज्जा सिद्धा जं तेसि निक्खमणकाले ।**

( पश्चात्क्रमो वा यदि संयतादिसिद्धावसाना तत ॥ ३२११ ॥ )
( येन कृतार्था सिद्धा न जिना, सिद्धादिक क्रमो युक्त । कृतसिद्धनमस्कारा कुर्वन्ति सामायिक सर्वे ॥ ३२१२ ॥ )
( यच्च जिनानामपि पूज्या सिद्धा यत् तेषां निष्क्रमणकाले ।

गाथार्थ ॥ ३२११–३२१२ ॥ अत्रोत्तरमाह—

**[illegible]णं सिद्धा नज्जंति तेण अरहाई । न वि कोइ वि परिसाए पणमित्ता पणमइ रन्नो ॥३२१३॥**

( [illegible] सिद्धा ज्ञायन्ते तेनार्हदादि । नापि कश्चिदपि परिषदं प्रणम्य प्रणमति राज्ञे ॥ ३२१३ ॥ )

[illegible] । यदप्युक्त 'सिद्धादिरय प्राप्नोति' । तदयुक्तम्, यतोऽर्हदुपदेशेनैव सिद्धा अपि ज्ञायन्ते, [illegible] । 'तेन' तस्मादर्हदादिरेव पूर्वानुपूर्वीक्रम इति गम्यते (प्र०. क्रम इष्यत इति) । अत एव [illegible] प्रायः समानमेव । तथा नमस्कार्यत्वमप्यसाधकमेव, अर्हन्नमस्कारपूर्वकमेव [illegible] । आह— यद्येवम्, तर्ह्याचार्यादिभिः क्रमः प्राप्तः, अर्हतामप्याचार्योपदेशेन परिज्ञाना- [illegible] । तदयुक्तम्, [illegible] श्रेयान्, परमनायकपदवर्तित्वात् तयोः । आचार्यास्त्वर्हता परिष- [illegible] । नापि कश्चित् परिषदं [illegible] प्रणमति राज्ञे । इत्यतोऽग्रेयमेवेदम् ॥ इति निर्युक्तिगाथार्थः ॥ [illegible] ॥ भाष्यकारः प्राह—

**[illegible]ओवएसओ जं जिणा[illegible] । [illegible] कमो जुत्तो नो चेदणेगंतो ॥३२१४॥**

( [illegible]आचार्योपदेशतो [illegible] ॥ ३२१४ ॥ )

[illegible] इत्यर्हतामादौ नमस्कारः, [illegible] प्रतिपत्तिर्भव्य- [illegible] क्रमो युक्तः, न चेदेवमिष्यते, [illegible] तस्य प्राधान्यमितरस्य च [illegible]

[illegible], तथा [illegible]

माणलक्षणा ३।

पूर्वानुपूर्व्य-
त्र, सिद्धा-
नामर्हदुप-
देशज्ञाप्य-
त्वात् अर्हन्न-
मस्कारपूर्व-
कत्वाच्च
[illegible]र्षदि मुख्य
एवादौ
नमस्कार्यः

जुत्तो व गणहराण जिणाइओ जं जिणोवएसेणं। जाणंति तेऽवसेसे, सेसा उ गुरूवएसेणं॥३२१५॥

( युक्तो वा गणधराणां जिनादिको यज्जिनोपदेशेन। जानन्ति तेऽवशेषान् शेषास्तु गुरूपदेशेन ॥ ३२१५ ॥ )

व्याख्या वदति– युक्तो वा गणधराणां गौतमादीनामयं जिनादिरर्हदादिः क्रमः, यस्मात् ते गौतमादयो जिनस्यार्हत एवोपदेशेनावशेषान् सिद्धाऽऽचार्यादीन् जानन्ति, शेषास्तु गणधरशिष्य प्रशिष्यादयो निजनिजगुरूपदेशेन सिद्धादीनर्हतश्च जानन्ति । ततः केषाञ्चिदर्हदादिः, केषाञ्चिदाचार्यादिः क्रमस्तदभिप्रायतोऽनियमेन भवन्त्विति ॥ ३२१५ ॥ तथा पर एवाह—

अहवा आयरिए च्चिय सो तेसिं मई तओ पसत्तो भे। आयरियाइउ च्चिय एवं सइ सव्वसाहूणं ।३२१६

( अथवाऽऽचार्य एव स तेषां मतिस्ततः प्रसक्तो भवताम्। आचार्यादिक एवं सति सर्वसाधूनाम् ॥ ३२१६ ॥ )

अथवा मतिः– स जिनो भगवानाचार्य एव तेषां गणधराणामाचारप्रवर्तकत्वमाश्रित्येति भावः । ततश्चैवं सति 'भे' भवतामाचार्यादिरेव सर्वसाधूनां गणधरादीनां क्रमः प्रसक्तः प्राप्त इति ॥ ३२१६ ॥ अत्र सूरिरुत्तरमाह—

पढमोवएसगहणं तं चारुहओ न सेसएहिंतो । गुरवो वि तदुवइट्ठस्स चेव अणुभासया नवरं ॥३२१७॥

अरहंत-गुरु-वज्झायभावओ तस्स गणहराणं पि। जुत्तो तयाइउ च्चिय न गुरु त्ति तओ जिणो न भवे॥३२१८

स जिणो जिणाइसयओ सो चेव गुरू गुरूवएसाओ। करणाइविणयणाओ सो चेव मओ उवज्झाओ॥३२१९

( प्रथमोपदेशग्रहणं तच्चार्हतो न शेषकेभ्यः । गुरवोऽपि तदुपदिष्टस्यैवानुभाषका नवरम् ॥ ३२१७ ॥ )

( अर्हद् गुरूपाध्यायभावतस्तस्य गणधराणामपि । युक्तस्तदादिक एव न गुरुरिति ततो जिनो न भवेत् ॥ ३२१८ ॥ )

( स जिनो जिनातिशयतः स एव गुरुर्गुरूपदेशात् । करणादिविनयनात् स एव मत उपाध्यायः ॥ ३२१९ ॥ )

व्याख्या– इह यद्यप्याचार्यादयोऽप्यर्हदादीनुपदिशन्ति तथापि यत् प्रथममुपदेशग्रहणं गणधराणां तदधिकृत्योच्यते । तच्चार्हत एव भगवतः, न शेषेभ्य आचार्योपाध्यायादिभ्यः । येऽपि गुरव आचार्यादयोऽर्हदादीनुपदिशन्ति तेऽपि तदुपदिष्टस्यार्हदुपदिष्टस्यैव केवलमनुभाषका न पुनः स्वातन्त्र्येण देशका इति । अथवा, यद्यप्याचार्याद्युपदेशेनार्हन्तो ज्ञायन्त इत्यभ्युपगम्यते, तथाप्यर्हदादिरेव क्रमः । कुत इत्याह– 'अरहंते'त्यादि गणधराणाम्, अपिशब्दाच्छेषाणामाचार्यादीनामपि तदादिरर्हदादिरेव क्रमो युक्तः । कुतः ? इत्याह–तस्यार्हत एवार्हद्गुरूपाध्यायभावतः । स एव हि महावीरादिर्भगवानष्टमहाप्रातिहार्याद्यतिशययोगादर्हन्, स एव तत्त्वोपदेशादिभ्यो गुरुराचार्यः, स एव चेन्द्रियनयनात् गौतमादिशिष्यानामुपाध्यायः । तथाचाचार्यादिक्रमेऽपि परिभाव्यमाने सामर्थ्यादर्हदादिरेव क्रमः सम्पद्यत इति भावः । न चाह गुरुरा-

आचार्यादयो नाद्योपदेशकाः

अर्हन् तत्त्वोपदेशादितो गुरुरेव, इन्द्रियादिनियमनादुपाध्यायः गुरुरपि जिनातिशययोगतो जिन एव..

नमस्कारः केवल्यर्हन्नैव, न छद्मस्थः

नार्य इत्यतो जिनोऽर्हन् न भवेत्, किन्तु भवेदेव, जिनातिशययोगादिति । एतदेवाह– 'स जिणो इत्यादि' गतार्था ॥ ३२१७ तः ३२१९॥

अथ यदुक्तम्– 'ज च जिणाण वि पुज्जा सिद्धा' इत्यादि, तत्राह—

जइ सिद्धनमोक्कारं छउमत्थो कुणइ न य तदाईओ। तं पइ तया न दोसो न हि सो तक्कालमरुहंतो ॥३२२०॥

( यदि सिद्धनमस्कार छद्मस्थ करोति न च तदादिक । त प्रति तदा न दोषो न हि स तत्कालमर्हन् ॥ ३२२० ॥ )

यदि निष्क्रमणकाले भगवाश्छद्मस्थो गुणाधिकाना सिद्धाना नमस्कार करोति, करोतु नाम तदा, न कश्चिद् दोषः । क प्रति न दोष' ? इत्याह– त छद्मस्थतीर्थङ्कर प्रति । न ह्यमौ तत्कालमर्हन्, केवलोत्पत्तावेव तद्भावादिति । यदि च्छद्मस्थतीर्थकरापेक्षया गुणाधिकाः सिद्धा भवद्भिरपीष्यन्ते, तर्हि कथ छद्मस्थतीर्थकरादिर्नमस्कारः ? इति चेत् । तदयुक्तम् । कुतः ? इत्याह– न च तदादिश्छद्मस्थतीर्थकरादिर्नमस्कार इष्यतेऽस्माभिः, किन्तु समुत्पन्नकेवलज्ञानाऽर्हदादिरेव । स च केवल्यर्हन् सिद्धादिवस्तुस्तोमस्वरूपोपदेशदानत. सिद्धेभ्यो गुणाधिक इत्युक्तमेवेति । अतोऽर्हदादिरेव नमस्कार इति ॥ ३२२० ॥ अत्राक्षेप-परिहारौ प्राह—

एवमकयत्थकाले सिद्धाई होउ, भण्णइ तयावि। अण्णे संतरुहंता तओ तयाई नओ निच्चं॥३२२१॥

( एवमकृतार्थकाले सिद्धादिर्भवतु, भण्यते तदापि । अन्ये सन्त्यर्हन्तस्ततस्तदादि सको नित्यम् ॥ ३२२१ ॥ )

यदि च्छद्मस्थतीर्थकरापेक्षया गुणाधिकाः सिद्धा', तर्ह्येव सत्यकृतार्थच्छद्मस्थतीर्थकरकाले सिद्धादिर्नमस्कारो भवतु, न्यायोपपन्नत्वादिति । भण्यतेऽत्रोत्तरम्– हन्त ! यदाऽत्र भरतादौ च्छद्मस्थतीर्थकरस्तदापि महाविदेहेष्वन्ये केवलिनोऽर्हन्तः सन्ति । ततस्तदादिरर्हदादिरेव तकोऽसौ नमस्कारो नित्य सर्वदा ॥ इति गाथाष्टकार्थः ॥ ३२२१ ॥

## ॥ तदेवमुक्तं क्रमद्वारम् ॥

प्रयोजन-फलद्वारे

अथ प्रयोजन-फलयोर्दर्शनार्थमाह—

इत्थय पओयणमिणं कम्मक्खय मंगलागमो चेव। इहलोय-पारलोइयदुविहफलं तत्थ दिट्ठंता ।३२२२

( अत्र च प्रयोजनमिदं कर्मक्षयो मङ्गलागमश्चैव । ऐहलौकिक पारलौकिकद्विविधफल तत्र दृष्टान्ता ॥ ३२२२ ॥ )

प्रयोजन कर्मक्षयो मङ्गलागमश्च

अत्र च नमस्कारकरणे प्रयोजनमिद यदुत– करणकाल एवाक्षेपेण ज्ञानावरणादिकर्मक्षयः, अनन्तकर्मपुद्गलापगममन्तरेण भावतो नमस्कारस्याप्यप्राप्तेरित्युक्तमेव, तथा, मङ्गलागमश्चैव यः करणकालभावीति; तथा, कालान्तरभावि पुनरैहलौकिक पारलौकिकभेदभिन्न द्विविधं फलम् । तत्र दृष्टान्ता वक्ष्यमाणलक्षणा इति ॥ ३२२२ ॥ तदेव द्विविध फल तावद् विवृण्वन्नाह—

तच्च श्रुतोपयोग-

तकोऽसौ नमस्कारः श्रुतमागम इत्यर्थः, स च श्रुतोपयोगप्रयोजनः श्रुतोपयोगः प्रयोजनं फलमस्येति कृत्वा । तच्च श्रुतोपयोग-

प्रयोजनमात्महितपरिज्ञाभावसंवरादिभेदेन बहुविकल्पं बहुभेदम्, उक्तं च—"आयहियपरिण्णाभावसंवरो नवनवो य संवेगो । निक्कंपया तवो

निज्जरा य परदेसियत्तं च ॥ १ ॥" (आत्महितपरिज्ञाभावसंवरो नवनवश्च संवेगः । निष्कम्पता तपो निर्जरा च परदेशितत्वं च ॥) इत्यादि । अतो

नमस्कारस्य श्रुतरूपत्वाद् भवत्येव तदुपयोगात् कर्मक्षय इति ॥ ३२२७ ॥ अत्र प्रेरक आह—

जिनसिद्धौ कथं फलप्रदौ कोपप्रसादराहित्यात्पूजाऽपरिग्राहित्वात्

**जिण-सिद्धा, दिट्ठंतो वइधम्मेणं निवाईया ३२२८**

**पूयाफलप्पया नहि नहं व कोव-प्पसायविरहाओ ।**

(पूजाफलप्रदौ नहि नभ इव कोप प्रसादविरहात् । जिन सिद्धौ, दृष्टान्तो वैधर्म्येण नृपादिका ॥ ३२२८ ॥)

नमस्कारलक्षणायाः पूजायाः फलं पूजाफलं तत्प्रदौ नहि नैव जिन-सिद्धौ, कोप प्रसादरहितत्वात्, नभोवदिति । ये तु पूजाफलदास्ते

कोप प्रसादरहिता न भवन्ति, यथा नृपादय इत्येष वैधर्म्येण दृष्टान्त इति ॥ ३२२८ ॥ एतदेव समर्थयन्नाह—

**पूयाणुवगाराओ अपरिग्गहओ विमुत्तिभावाओ । दूराइभावओ वा विफला सिद्धाइपूय त्ति ॥३२२९॥**

(पूजानुपकारात्परिग्रहतो विमूर्तिभावात् । दूरादिभावतो वा विफला सिद्धादिपूजेति ॥ ३२२९ ॥)

विफला सिद्धादिपूजेति प्रतिज्ञा । हेतूनाह—पूजाया अनुपक्रियमाणत्वात्, तदपरिग्राहित्वात्, अमूर्तत्वात्, दूरादिभावात्, नभोवदिति ।

॥ ३२२९ ॥ अत्र प्रतिविधानमाह—

फले निमित्ते जीवधर्माधर्मौ न जिनसिद्धदेयापहार्यौ

**जिण-सिद्धा दिंति फलं पूयाए केण वा पवण्णमिणं । धम्मा-ऽधम्मनिमित्तं फलमिह जं सव्वजीवाणं ३२३०**

**ते य जओ जीवगुणा तओ न देया न वा समादेया । कयनासा-ऽकयसंभोग-संकरे-गत्तदोसाओ ३२३१**

(जिन सिद्धा ददति फलं पूजाया केन वा प्रपन्नमिदम् । धर्मा ऽधर्मनिमित्तं फलमिह यत् सर्वजीवानाम् ॥ ३२३० ॥)

(तौ च यतो जीवगुणौ ततो न देयौ न वा समादेयौ । कृतनाशा-ऽकृतसंभोग संकर-करत्वोपेभ्य ॥ ३२३१ ॥)

व्याख्या—नन्वयमयुक्तोपालम्भः सर्वोऽपि पूर्वोक्तः, यस्मात् 'जिन-सिद्धाः पूजायाः फलं ददति' इति केनेदं प्रपन्नम् ? । धर्मा-

ऽधर्मनिमित्तमेव हि यस्मात् स्वर्ग नरकादिकं फलमिह सर्वजीवानामिति । तौ च धर्माधर्मौ यतो जीवगुणौ ततो न कस्यापि देयौ दातव्यौ

नापि कुतश्चित् समादेयौ ग्राह्यौ, ज्ञानादिगुणवत् । कुतः ? इत्याह—'कयनासे'त्यादि, यदि ह्येते जिन सिद्धाः कुपिताः सन्तः कस्यापि धर्म-

मपहरेयुः, अधर्मं च प्रयच्छेयुः, तदा कोपविषयभूतस्य प्राणिनः कृतस्य धर्मस्य नाशः, अकृतस्य चाधर्मस्यागमः स्यात्, प्रसन्ना वा यदि

कस्याप्याकस्मिकं धर्मं प्रयच्छेयुः, अधर्मं चापहरेयुः, तदाऽकृतस्य धर्मस्यागमः, कृतस्य चाधर्मस्य नाशो भवेदिति । एवं यदा ते प्रसन्नाः

कुपिता वा कस्यापि सम्बन्धिनौ धर्मा ऽधर्मावाच्छिद्यान्यस्य दद्युः, अन्यस्य सम्बन्धिनौ चापरस्य, तदा प्राणिना परस्परं धर्मा ऽधर्मयोः

मध्य:, एकत्व वा स्यात् । एव स्वर्ग-नरकादिके धर्मा-ऽधर्मफलेऽपि कृतनाशादिभावना कार्येति ॥ ३२३०–३२३१ ॥ अपि च,

नाणाणाबाहसुहं मोक्खो पूयाफलं जओऽभिमयं । तं नायपज्जयाओ देयं जीवाइभावो व्व ॥३२३२॥

( ज्ञानानाबाधसुखं मोक्षः पूजाफलं यतोऽभिमतम् । तद् नात्मपर्यायाद् देयं जीवादिभाव इव ॥ ३२३२ ॥ )

ज्ञानं मन्यनाबाधस्य यत् सुखं तद्रूपो यो मोक्षः स एव यस्माद् नमस्कारलक्षणायाः पूजायाः परमार्थतो मुख्य फलमभिमतम्, स्वर्गादिरानुषङ्गिकत्वात् । तच्च यथोक्त सुखं न कस्यापि देयं दातुं शक्यम्, आत्मपर्यायत्वात्, जीव-चैतन्यादिभाववत् । ततश्च पूजाफलदाननिषेधे सिद्धसाधनमेवेति ॥ ३२३२ ॥ यदि पूजाफलं न देयं तर्हि किं देयमिह भवेत् ? इत्याह—

भत्ताइ होज्ज देयं न तदत्थो पूयणप्पयत्तोऽयं । तं पि सकओदयं चिय बज्झनिमित्तं परो नवरं ॥३२३३॥

( भक्तादि भवेद् देयं न तदर्थः पूजनप्रयत्नोऽयम् । तदपि स्वकृतोदयमेव बाह्यनिमित्तं परो नवरम् ॥ ३२३३ ॥ )

शाल्योदनादिरूपं भक्तादिकं परस्मै देयं भवेत्, स्थूलपुद्गलस्कन्धमयत्वात्, घटादिवत् । केवलं तदर्था भक्ताद्यर्थोऽयं पूजनप्रयत्नो न भवति, किन्तु मोक्षार्थः । किञ्च, तदपि भक्तादिकं स्वकृतात् कर्मण उदय उत्पत्तिर्यस्य तत् स्वकृतोदयं स्वकृतकर्मजनितमेवेत्यर्थः । यस्तु परः कश्चिद् दाता दृश्यते स केवलं बाह्यनिमित्तमात्रमेव । निश्चयतस्तु बाह्यो न कोऽपि कस्यापि दाता-ऽपहर्ता चेति ॥ ३२३३ ॥

एतदेव समर्थयन्नाह—

कम्मं सुहाइहेऊ बज्झयरं कारणं जया देहो । सद्दाइ बज्झतरयं जइ दायारे कहा का णु ? ॥ ३२३४ ॥

तम्हा सकारणं चिय सुहाइ बज्झं निमित्तमेत्तायं । को कस्स देइ हरइ व निच्छयओ का कहा सिद्धे ? ॥३२३५॥

( कर्म सुखादिहेतुर्बाह्यतरं कारणं यदा देहः । शब्दादि बाह्यतरकं यदि दातरि कथा का नु ? ॥ ३२३४ ॥ )

( तस्मात् स्वकारणमेव सुखादि बाह्यं निमित्तमात्रकम् । कः कस्य ददाति हरति वा निश्चयतः का कथा सिद्धे ? ॥ ३२३५ ॥ )

व्याख्या—यदि हन्त ! सुख-दुःखानामन्तरङ्गं कर्मैव हेतुः, देहस्तु यदा तेषां बाह्यतरं कारणम्, शब्द-रूपादिकं तु शुभाशुभमतिबाह्यतरं कारणम्, तदाऽतिबाह्यतरादपि परभूते दातरि काऽत्र किल कारणत्वकथा ? इति । तस्मात् स्वमात्मीयं कर्मैव कारणं यस्य तत् स्वकारणमेव सुखादि, बाह्यं तु देह-शब्द-रूपादिकं निमित्तमात्रकमेव । ततो निश्चयतः कः कस्मै ददाति, अपहरति वा ? न कश्चिदित्यर्थः । कथा च सति सिद्धे वीतरागद्वेषे सिद्धे का नमस्कारफलदातृत्वकथा ? इति ॥ ३२३४–३२३५ ॥ अत्र परप्रेरितं परिहारं चाह—

जइ सव्वं सकयं चिय न दाण-हरणाइफलमिहावन्नं । नणु जत्तो च्चिय सकयं तत्तो च्चिय तप्फलं जुत्तं ॥३२३६॥

( यदि सर्वं स्वकृतमेव न दान-हरणादिफलमिहापन्नम् । ननु यत एव स्वकृतं तत एव तत्फलं युक्तम् ॥ ३२३६ ॥ )

नमस्कार-
मुख्यफल-
मोक्ष आत्मनः
पर्यायः न
केनचिद्देय-
स्वरूपः

सुखादिहेतुः
स्वकर्म

तं पुण्ण पावं वा ठियमत्तणि वज्झपच्चयाविक्खं । कालंतरपागाओ देइ फलं न परओ लब्भं॥ ३२३८॥

दाणाइपराणुग्गहपरिणामविसेसओ सओ चेव । पुण्णं, हरणाइ-परोवघायपरिणामओ पावं ॥३२३७॥

( दानादिपरानुग्रहपरिणामविशेषत स्वत एव । पुण्य हरणादि-परोपघातपरिणामत पापम् ॥ ३२३७ ॥ )

( तत पुण्य पाप वा स्थितमात्मनि बाह्यप्रत्ययापेक्षम् । कालान्तरपाकाद् ददाति फलं न परतो लभ्यम ॥ ३२३८ ॥ )

व्याख्या— यद्युक्तप्रकारेण यल्लोकः शुभमशुभ वा फलमनुभवति तत् सर्व स्वकृतमेवेष्यते, न पुन कोऽपि कस्यापि किमपि ददात्य पहरति वा, तर्हि दाना ऽपहरणादीनामिह दातुरपहर्तुर्वा न किञ्चित् फलमित्यापन्नम्, स्वकृतस्यैव फलेन तस्य प्राप्तत्वादिति । सूरिराह— ननु यत एव तत् स्वकृतम्, तत एव तत्फल दातुरपहर्तुश्च युक्तम् । दाता हि दानसमये परानुग्रहपरिणामविशेषात् स्वत एव पुण्यं बध्नाति, अपहर्ता तु परोपघातपरिणामात् स्वत एव पाप बध्नाति । अतस्तयोस्तत् पुण्य पापलक्षण फल स्वकृतमेवेति कथ न युक्तम्? युक्तमेवेति । एतदेवाह— 'दाणाई'त्यादि, आदिशब्दाद् दयादिपरिग्रह । 'सओ चेव' त्ति, स्वत एव स्वकृतमेव दातु. पुण्यम्, स्वत एव चापहर्तुः पापम् । शेष गतार्थमिति । तच्च पुण्य पाप वा स्वपरिणामजनितमात्मन्येव स्थितम्, किन्तु बाह्यनिमित्तमात्रापेक्ष कालान्तरे विपाकात् शुभमशुभ वा फल ददातीति 'परकृतम्' इति व्यपदिश्यते, न पुनः परमार्थतस्तत् पुण्य पापफल परतो लभ्यमिति ॥ ३२३६-३२३७ ३२३८ ॥

ननु परतस्तल्लाभे को दोष? इत्याह—

जइ वा परलहियव्वं तत्तो च्चिय जेण तप्परिग्गहियं । तो तम्मि सिवं पत्ते कुगइगए वा कुओ लब्भं? ॥

( यदि वा परलब्धव्य तत एव येन तत्परिगृहीतम । ततस्तस्मिन् शिव प्राप्ते कुगतिगते वा कुतो लभ्यम? ॥ ३२३९ ॥ )

स्पष्टा ॥ ३२३९ ॥ अपि च, यदि येन यद् दत्त तस्मै तद् देयम्, यस्य चापहृतमसावपि तस्यापहरति, तदेद दूषणम् । किं तत्? इत्याह—

लहइ अदितो व कओ साहू जं दिज्ज पुव्वदाइस्स? । कत्तोऽवहारिणो तं जं पडिहीरिज्ज से धणिणो? ॥

अहव मई जं तेण वि दिण्णं अण्णस्स तं तओ लद्धुं (प्र० लद्ध) पडिदेइ तदाहारी हारीओ अण्णओ लद्धुं ।३२४१

( लभतेऽदद् वा कुत साधुर्यद् दद्यात् पूर्वदायिन? । कुतोऽपहारिणस्तद् यत् प्रतिह्रियते तस्य धनिन? ॥ ३२४० ॥ )

( अथवा मतिर्यत् तेनापि दत्तमन्यस्य तत् ततो लब्ध्वा । प्रतिदद्यात् तदाहारी हारिणोऽन्यतो लब्ध्वा ॥ ३२४१ ॥ )

व्याख्या— वाऽथवा, इह निर्ग्रन्थत्वेन साधुर्दानमददद्अप्रयच्छन् मृत्वा भवान्तर प्राप्तः पूर्वमदत्तत्वात् कुतः कस्मादाहारादिक तल्लभते यत् पूर्वभवसम्बन्धिन आहारादिदातुस्तदानीं दद्यात्? इति, यो वा पूर्वभवे कस्यापि सम्बन्धिनमपहृत्य मृतो जन्मान्तरे निःस्वो जातः 'से' तस्य परधनापहारिणः कुतस्तद् धन यत् पूर्वभवधनिना प्रतिह्रियते? इति । अथ मति परस्य भवेत्— तेनापि साधुना यदनेकभवेष्व-

स्वकीयात् परानुग्रहोपघातपरिणामविशेषादेव पुण्य-पापे बाह्यनिमित्तमात्रापेक्षे

दात्रे देयमेवापहर्तुश्चापहरत्येवेति न नियमोऽनवस्थादितः

न्यस्ताहारादिकं दत्त तत् ततो लब्ध्वा पूर्वभवदातुः प्रतिददाति, तथा, योऽपि पूर्वभवे परधनमपहृत्येहभवे निःस्वो जातस्तस्यापि सन्निधिनं नानाभवेष्वन्येनान्येन प्राऽपहृतमास्ते, ततश्चासौ ततः स्वधनापहारिणोऽन्यतः स्वराशात् स्वापहृतं लब्ध्वा यस्य सत्कं तेन पूर्वमपहृतं तस्मै प्रतिददाति' इति शेषः (ग्र०–२६०००) ॥ ३२४०-३२४१ ॥ तदेतत् सर्वमयुक्तम्, कुतः ? इत्याह—

एवं होउणवत्था दाणु-ग्गहणाणमपरिभोगो य। जइ परओ लद्धव्वं दिण्णं वा तस्स तं चेव ॥३२४२॥

(एवं भवत्यनवस्था दान ग्रहणयोरपरिभोगश्च। यदि परतो लब्धव्यं दत्तं वा तस्मै तदेव ॥ ३२४२ ॥)

यदि दानादिविषयस्वपरिणामवशात् पुण्य पापे नेष्येते, किन्तु यद् यस्मै दत्त तत् तस्मादेव परतो लभ्यमित्यभ्युपगम्यते; यस्माद् या गृहाहारादिकं कदापि लब्ध तत् तस्यैवान्यदा दत्त न पुनर्दायकेन ग्राहकस्य किमप्यधिकं कृतमिति चेष्यते; तदैव सति दान ग्रहणयोरनवस्था प्राप्नोति. यस्मै दानं तस्मात् पुनर्ग्रहणम्, पुनरपि तस्मै दानम्, पुनरपि तस्माद् ग्रहणमित्यादि। ततश्च दान ग्रहणपरम्पराव्यापृतस्य दायकस्य न स्वयमपरिभोगः प्राप्नोति, अन्योन्यदान-ग्रहणाभ्यामाय-व्ययविशुद्धत्वादिति ॥ ३२४२ ॥

तदेवं नैयायिकविशेषाणां नास्तिकादीनां मतमपाकृत्योपसंहारपूर्वकं स्वाभिमतमुपदर्शयन्नाह—

म्हा स-पराणुग्गहपरिणामाओ सुपत्तविणिओगा। दाया पुण्णं पावइ जं तत्तो से फलं होइ ॥३२४३॥

(तस्मात् स्व पराणुग्रहपरिणामात् सुपात्रविनियोगात्। दाता पुण्यं प्राप्नोति यत् ततस्तस्य फलं भवति ॥ ३२४३ ॥)

तस्मात् स्व परानुग्रहपरिणामेन सुपात्रेषु वित्तविनियोगाद् दाता यत् पुण्यं प्राप्नोति, ततः 'से' तस्य दातुः फलं स्वर्गादिकं भवतीति। ॥ ३२४३ ॥ तदेवमनन्तरोक्ता दाता स्वत एवेह स्वर्गादिफलं लभते, न तु परतः, ग्रहीताप्येवमेव द्रष्टव्य इति दर्शयन्नाह—

जह सो पत्ताणुग्गहपरिणामाओ फलं सओ लहइ। तह गिण्हंतो वि फलं तदणुग्गहओ सओ लहइ॥

(यथा स पात्रानुग्रहपरिणामात् फलं स्वतो लभते। तथा गृह्णन्नपि फलं तदनुग्रहतः स्वतो लभते ॥ ३२४४ ॥)

गतार्था ॥ ३२४४ ॥ एवं परधनापहार्यपि स्वत एव वध-बन्धन-नरकादिकं पापफलं लभते, न परत इति दर्शयति—

हारी वि हरणपरिणामदूसिओ वज्झपच्चयाविक्खं। पावो पावं पावइ जं तत्तो से फलं होइ ॥३२४५॥

(हार्यपि हरणपरिणामदूषितो बाह्यप्रत्ययापेक्षम्। पापं पापं प्राप्नोति यत् ततस्तस्य फलं भवति ॥ ३२४५ ॥)

इयमप्युक्तार्थैव ॥ ३२४५ ॥ प्रकारान्तरमाह—

जह मायत्तं नाणे परिणामाओ फलं लहेहावि। नियपरिणामउ च्चिय सिद्धं जिण-सिद्धपूयाए॥ ३२४६

(यथा स्वायत्तं ज्ञाने परिणामात् फलं लभत इहापि। निजपरिणामत एव सिद्धं जिन सिद्धपूजायाम् ॥ ३२४६ ॥)

प्रकटार्थगाथा ॥ ३२४६ ॥ अथ जिनादिपूजाप्रतिष्ठार्थं प्रमाणयन्नाह—

कज्जा जिणाइपूया परिणामविसुद्धिहेउओ निच्चं। दाणाइउ व्व मग्गप्पभावणाओ य कहणं व ३२४७

( कार्या जिनादिपूजा परिणामविशुद्धिहेतुतो नित्यम्। दानादय इव मार्गप्रभावनातश्च कथनमिव ॥ ३२४७ ॥ )

कार्या नित्यं जिनादिपूजेति प्रतिज्ञा, स्वपरिणामविशुद्धिहेतुत्वादिति हेतुः, दानादिवदिति दृष्टान्तः। अथवा, कार्या नित्यमेव जिनादिपूजा, मोक्षमार्गप्रभावकत्वात्, धर्मकथनवदिति ॥ ३२४७ ॥ 'कोप-प्रसादरहितत्वात्' इति परोक्तहेतोरनैकान्तिकता दर्शयन्नाह—

नित्यपूजा परिणाम-विशुद्धि-हेतुतः

कोव-प्पसायरहियं पि दीसए फलदमण्ण-पाणाइं। कोव-प्पसायरहियं ति निप्फलं तो अणेगंतो ३२४८

( कोप प्रसादरहितमपि दृश्यते फलदमन्न-पानादि। कोप प्रसादरहितमिति निष्फलं ततोऽनेकान्तः ॥ ३२४८ ॥ )

पूर्वार्धं सुबोधम्। ततः 'कोप प्रसादरहितं वस्तु निष्फलम्' इत्यनेकान्तः, अन्न-पानादिभिर्व्यभिचारादिति ॥ ३२४८ ॥

अपिच, विरुद्धोऽप्ययं हेतुरिति दर्शयन्नाह—

कोवाइविरहियं चिय सव्वं जमणुग्गहोवघायाय। दीसइ तेण विरुद्धं फलमिह कोव-प्पसायाओ ३२४९

( कोपादिविरहितमेव सर्वं यदनुग्रहोपघातयोः। दृश्यते तेन विरुद्धं फलमिह कोप प्रसादाभ्याम् ॥ ३२४९ ॥ )

इहाकाशा-ऽन्नपान पीयूष विष-चिन्तामण्य ऽन्योपल-कल्पद्रुम विषवृक्ष-गुड-नागर-हरीतकी मरीचाद्यौषधादिकं सर्वमपि वस्तु कोप प्रसाद-विरहितमेव यस्मादनुग्रहोपघातयोः प्रवर्तमानं दृश्यते, तेन तस्मादिह कोप प्रसादतः सकाशात् फलमुच्यमानं विरुद्धमेव सलक्ष्यते, तथाहि— कोपादिरहितादप्याकाशादेर्व्रणे उपघातः, पङ्कपन्धादेस्त्वनुग्रहः, हितमितान्नपानादेरनुग्रहः, तस्माद् विपरीतात् पुनरुपघातः, एवं पीयूष विषादे-रपि सकाशात् कोपादिविरहितादनुग्रहोपघातौ दृश्येते। ततो विरुद्धोऽयं हेतुः, विपक्ष एव वृत्तिदर्शनादिति ॥ ३२४९ ॥

विपादि-जडपदार्थाः कोपादिशून्यत्वेऽपि उपघातादिकारिणः

अथ राजादीनां हरण प्रदानहेतवः कोप-प्रसादा भवन्तीति प्रत्यक्षत एव दृष्टमिति परस्य मतिर्भवेत्, ननु तदपि सर्वस्यापि हरण प्रदानं वा स्वपाप पुण्यकृतमेव। यस्तु परः, स तत्र केवलं निमित्तमात्रमेवेति प्रागेव भणितमिति दर्शयन्नाह—

हरण-प्पयाणहेऊ हवेज्ज कोवादओ मई तं पि। णणु सकयं चिय भणियं निमित्तमेत्तं परो नवरं ३२५०

( हरण प्रदानहेतवो भवेयुः कोपादयो मतिस्तदपि। ननु स्वकृतमेव भणितं निमित्तमात्रं परो नवरम् ॥ ३२५० ॥ )

गतार्था ॥ ३२५० ॥ अथ अपहरण प्रदानादिकं स्वकृतं नेष्यते, तत्राह—

जइ वा न सकयहेउ तं तो कोव-प्पसायवं राया। सो सव्वसेवयाणं समाणफलदो कहं न भवे? ३२५१

( यदि वा न स्वकृतहेतु तत् तत कोप प्रसादवान् राजा। स सर्वसेवकानां समानफलदः कथं न भवेत्? ॥ ३२५१ ॥ )

न्यस्याहारादिकं दत्तं तत् ततो लब्ध्वा पूर्वभवदातुः प्रतिददाति; तथा, योऽपि पूर्वभवे परधनमपहृत्येहभवे निःस्वो जातस्तस्यापि संबन्धिन नानाभवेष्वन्येनान्येन वाऽपहृतमास्ते, ततश्चासौ ततः स्वधनापहारिणोऽन्यतः सकाशात् स्वापहृतं लब्ध्वा यस्य सत्कं तेन पूर्वमपहृतं तस्मै 'प्रतिदद्यात्' इति शेषः (ग्र०–२६०००) ॥ ३२४०-३२४१ ॥ तदेतत् सर्वमयुक्तम्, कुतः ? इत्याह—

एवं होउणवत्था दाण-ग्गहणाणमपरिभोगो य। जइ परओ लद्धव्वं दिण्णं वा तस्स तं चेव ॥३२४२॥

(एवं भवत्यनवस्था दान ग्रहणयोरपरिभोगश्च। यदि परतो लब्धव्यं दत्तं वा तस्मै तदेव ॥ ३२४२ ॥)

यदि दानादिविषयस्वपरिणामवशात् पुण्य-पापे नेष्येते, किन्तु यद् यस्मै दत्तं तत् तस्मादेव परतो लभ्यमित्यभ्युपगम्यते; यस्माद् वा यदाहारादिकं कदापि लब्धं तत् तस्यैवान्यदा दत्तं न पुनर्दायकेन ग्राहकस्य किमप्यधिकं कृतमिति चेष्यते; तदैवं सति दान ग्रहणयोरनवस्था प्राप्नोति, यस्मै दानं तस्मात् पुनर्ग्रहणम्, पुनरपि चान्यस्मै दानम्, पुनरपि तस्माद् ग्रहणमित्यादि। ततश्च दान ग्रहणपरम्पराव्याप्तस्य मोक्षाभावप्रसङ्गः, दानफलस्य च स्वयमपरिभोगः प्राप्नोति, अन्योन्यदान-ग्रहणाभ्यामाय-व्ययविशुद्धत्वादिति ॥ ३२४२ ॥

तदेवं तीर्थिकविशेषाणां सौस्नातिकादीनां मतमपाकृत्योपसंहारपूर्वकं स्वाभिमतमुपदर्शयन्नाह—

तम्हा स-पराणुग्गहपरिणामाओ सुपत्तविणिओगा। दाया पुण्णं पावइ जं तत्तो से फलं होइ॥३२४३॥

(तस्मात् स्व परानुग्रहपरिणामात् सुपात्रविनियोगात्। दाता पुण्यं प्राप्नोति यत् ततस्तस्य फलं भवति ॥ ३२४३ ॥)

तस्मात् स्व-परानुग्रहपरिणामेन सुपात्रेषु वित्तविनियोगाद् दाता यत् पुण्यं प्राप्नोति, ततः 'से' तस्य दातुः फलं स्वर्गादिकं भवतीति। ॥ ३२४३ ॥ तदेवमुक्तनीत्या दाता स्वत एवेदं स्वर्गादिफलं लभते, न तु परतः, ग्रहीताप्येवमेव द्रष्टव्य इति दर्शयन्नाह—

जह सो पत्ताणुग्गहपरिणामाओ फलं सओ लहइ। तह गिण्हंतो वि फलं तदणुग्गहओ सओ लहइ॥

( यथा स पात्रानुग्रहपरिणामात् फलं स्वतो लभते। तथा गृह्णन्नपि फलं तदनुग्रहतः स्वतो लभते ॥ ३२४४ ॥)

गतार्था ॥ ३२४४ ॥ एवं परधनापहार्यपि स्वत एव वध-बन्धन-नरकादिकं पापफलं लभते, न परत इति दर्शयति—

हारी वि हरणपरिणामदूसिओ वज्झपच्चयाविक्खं। पावो पावं पावइ जं तत्तो से फलं होइ॥ ३२४५॥

( हार्यपि हरणपरिणामदूषितो बाह्यप्रत्ययापेक्षम्। पापः पापं प्राप्नोति यत् ततस्तस्य फलं भवति ॥ ३२४५ ॥)

इयमप्युक्तार्थप्राया ॥ ३२४५ ॥ अथ प्रकृतयोजनामाह—

जह सायत्तं दाणे परिणामाओ फलं तहेहावि। निययपरिणामउ च्चिय सिद्धं जिण-सिद्धपूयाए॥ ३२४६

( यथा स्वायत्तं दाने परिणामात् फलं तथेहापि। निजकपरिणामत एव सिद्धं जिन सिद्धपूजायाम् ॥ ३२४६ ॥)

विर्धीयते, तद् सर्वमजीवकरणमिति । तदेवमुक्तं द्रव्यकरणम् ॥ ३३४२ ॥ अथ क्षेत्रकरणमभिधित्सुराह—



इह दव्वं चेव निवासमेत्तपज्जायभावओ खेत्तम् । भन्नइ नभं न तस्स य करणं निव्वत्तिओऽभिहियं ।३३४३।

होज्ज व पज्जायाओ पज्जाओ जेण दव्वओऽणन्नो । उवयारमेत्तओ वा जह लोए सालिकरणाई ॥३३४४॥

खेत्ते व जत्थ करणं ति खित्तकरणं तयं जहा सिद्धं । खित्तं पुण्णमिणं पुण्णकरणसंबंधमेत्तेणं॥३३४५॥

क्षेत्र-करणम्

( इह द्रव्यमेव निवासमात्रपर्यायभावत क्षेत्रम् । भण्यते नभो न तस्य च करण निर्वृत्तितोऽभिहितम् ॥ ३३४३ ॥)
( भवेद् वा पर्यायात् पर्यायो येन द्रव्यतोऽनन्य । उपचारमात्रतो वा यथा लोके शालिकरणादि ॥ ३३४४ ॥ )
( क्षेत्रे वा यत्र करणमिति क्षेत्रकरण तद् यथा सिद्धम् । क्षेत्र पुण्यमिद पुण्यकरणसम्बन्धमात्रेण ॥ ३३४५ ॥ )

व्याख्या–इह द्रव्यमेव सद् नभः क्षेत्र भण्यते । कुत इत्याह– 'निवासे'त्यादि, मात्रशब्दस्य व्यवहितः प्रयोगः, निवासपर्यायभावमात्रत इत्यर्थः । इदमुक्तं भवति–'क्षि निवास गत्योः' इति 'क्षियन्ति निवसन्ति जीवा अजीवाश्चात्र' इत्यौणादिके त्रप्रत्यये क्षेत्रम्, इत्यस्मादन्वर्थाद् द्रव्यमपि नभः क्षेत्रमुच्यते । तस्य च नभसो निर्वृत्तितो निष्पादनेन करण नाभिहितम्, अकृत्रिमत्वादस्येति । यदि तस्य करणं नास्ति, तर्हि करणभेदेषु पाठः किमर्थः ? इत्याशङ्क्याह– 'होज्ज वे'त्यादि भवेद् वा क्षेत्रस्यापि करण 'पज्जायाउ' त्ति, घट-पटादिसयोगवियोगादिपर्यायानाश्रित्येत्यर्थः । पर्याया हि सर्वेषामपि वस्तूनामनित्या इत्यतस्तेषा करणमपि सभवति । यदि नाम पर्यायाणां करणं सभवति, तर्हि द्रव्यस्य किमायातम् ? इत्याह– पर्यायो येन द्रव्यादनन्योऽभिन्नस्तेन पर्यायस्य करणं द्रव्यस्यापि करणं भवत्येवेति । उपचारतो वा क्षेत्रकरण भण्यते । 'जह लोए सालिकरणाइ' त्ति, यथा लोके वक्तारो भवन्ति–'शालिक्षेत्रमिक्षुक्षेत्रं वा मया कृतम्' इत्यादि । अथवा 'क्षेत्रस्य करणम्' इति षष्ठीतत्पुरुषो न क्रियते, किन्तु क्षेत्रे करण क्षेत्रकरणमिति सप्तमीतत्पुरुष इति दर्शयन्नाह– 'खेत्ते वे'त्यादि अथवा, यत्र क्षेत्रे करण पुण्यादेस्तत् क्षेत्रकरणम्, यथा लोकेऽपि सिद्धमेतत्– 'पुण्यमिदमुज्जयन्त-शत्रुञ्जयादिक्षेत्र, पुण्यकरणसम्बन्धमात्रेण, तत्र हि ये दाना ऽनशनादिक कुर्वन्ति, तेषा महत् पुण्यं भवति, इत्यत. पुण्यस्य तत्र करणात् पुण्य क्षेत्र तदिति । उक्तं क्षेत्रकरणम् ॥ ॥ ३३४३–३३४४–३३४५ ॥

अथ कालकरण वाच्यम् । तत्र कालस्याप्यकृत्रिमत्वात् करण नास्ति, द्रव्यपर्यायत्वविवक्षया तस्य तद् भवेद् वेति दर्शयति–

जं वत्तणाइरूवो कालो दव्वस्स चेव पज्जाओ । तो तेण तस्स तम्मि व न विरुद्धं सव्वहा करणं ॥३३४६॥

कालकरणम्

( यद् वर्तनादिरूप कालो द्रव्यस्यैव पर्याय । ततस्तेन तस्य तस्मिन् वा न विरुद्धं सर्वथा करणम् ॥ ३३४६ ॥ )

यस्माद् प्रागुक्तस्वरूपो वर्तमानादिरूपः कालो द्रव्यस्यैव पर्याय., पर्यायश्च द्रव्यादभिन्न , ततो यथा द्रव्यस्य तथा तस्यापि करण न

चराणि ववबालवादिसप्त करणानि

विरुद्धम् । कथमित्याह– तेन कालेन, तस्य वा, तस्मिन् वेत्यादिभिः सर्वथा सर्वैरपि प्रकारैरिति ॥ ३३४६ ॥

अथवा, ज्योतिष्कमार्गप्रसिद्धमेवेह कालकरण गृह्यत इति दर्शयति—

**अहवेह कालकरणं ववाइ जोइसियगइविसेसेणं। सत्तविहं तत्थ चरं चउव्विहं थिरमक्खायं ॥३३४७॥**

( अथवेह कालकरण ववादि ज्यौतिषिकगतिविशेषेण । सप्तविध तत्र चर चतुर्विध स्थिरमाख्यातम् ॥ ३३४७ ॥ )

अथवा, वव-बालवादिरूप चन्द्राऽऽदित्यादिज्योतिष्कदेवगतिविशेषेण यद् भवति तदिह कालकरण गृह्यते । तत्र च ववादिरूपे कालकरण सप्तविध चरम्, अन्यान्यतिथिषु भावात्, चतुर्विध तु स्थिरमाख्यातम्, नियतास्वेव तिथिषु भावादिति ॥ ३३४७ ॥

तत्र यत् सप्तविध चर तदाह—

**ववं च बालवं चेव कोलवं तीइलो य णं। गरो हि वणियं चेव विट्ठी हवइ सत्तमा ॥ ३३४८ ॥**

( वव च बालव चैव कौलवस्तैतिलश्च । गरो हि वणिजश्चैव विष्टिर्भवति सप्तमी ॥ ३३४८ ॥ )

अस्य सप्तविधस्यापि चरस्य करणस्यानयनोपायमाह—

**पक्खतिहओ दुगुणिया दुरूवरहिया य सुक्कपक्खम्मि। सत्तहिए देवसियं तं चिय रूवाहियं रत्तिं ॥३३४९**

( पक्षतिथयो द्विगुणिता द्विरूपरहिताश्च शुक्लपक्षे । सप्तहृते दैवसिक तदेव रूपाधिक रात्रौ ॥ ३३४९ ॥ )

कृष्णस्य शुक्लस्य वा प्रस्तुतपक्षस्य यास्तिथयोऽतिक्रान्तास्ता द्विगुणीक्रियन्ते । ततश्चागतराशेः सप्तभिर्भागो ह्रियते । एव च कृते यत् करणमागच्छति तत् प्रस्तुततिथौ कृष्णपक्षे दैवसिक विज्ञेयम्, रूपाधिक तु तदेव रात्रौ; यथा कृष्णदशम्या द्विगुणिताया विंशतिर्भवति । ततः सप्तभिर्भागे हृते षट्शेषा भवन्ति । तथा चेद षष्ठ वणिजभिधान दैवसिक करणं लब्धम्, रूपे तत्र प्रक्षिप्ते रात्रिगत विष्ट्यभिधान सप्तम करण लभ्यते । एवमन्यत्रापि कृष्णपक्षे द्रष्टव्यम् । शुक्लपक्षे विशेषमाह– 'दुरूवरहिया य सुक्कपक्खम्मि' त्ति, शुक्लपक्षे द्विगुणित-तिथिराशेर्द्वौ पात्येते, ततो दैवसिक करणमागच्छति, रूपाधिक तु रात्रिगत भवति; यथा शुक्लचतुर्थ्यां द्विगुणितायामष्टौ भवन्ति, द्वयोश्च पातितयोः षड् भवन्ति, सप्तभिश्च भागो न पूर्यते, ततस्तदेव दैवसिक षष्ठ करण लब्धम्, रूपे तु प्रक्षिप्ते सप्तम विष्ट्यभिधान रात्रिगतं करण लभ्यते । एवमन्यत्रापि शुक्लपक्षे भावनीयम् । इह च लोकप्रसिद्धकरणानयनोपायोऽन्योऽपि विद्यते, तद्यथा– “तिहि दुगुणी, एक्कहिं ऊणी सत्तहिं हरण, सेस करणं” ( तिथिर्द्विगुणा, एकेनोना, सप्तभिर्हरणं, शेष करणम् ) इति । अयमपि युक्तः, केवलमिह मास तिथयो द्विगुणयितव्याः, यच्चेहागच्छति तद् रात्रिकरणम् (प्र०...रात्रिगतं करण), रूपे तु पातिते दिवसगत द्रष्टव्यमिति ॥ ३३४९ ॥ अथ चतुर्विधं स्थिरकरणमाह—

विधीयते, तत् सर्वमजीवकरणमिति । तदेवमुक्तं द्रव्यकरणम् ॥ ३३४२ ॥ अथ क्षेत्रकरणमभिधित्सुराह—

क्षेत्र-करणम्

इह दव्वं चेव निवासमेत्तपज्जायभावओ खेत्तम् । भन्नइ नभं न तस्स य करणं निव्वत्तिओऽभिहियं ।३३४३।
होज्ज व पज्जायाओ पज्जाओ जेण दव्वओऽणन्नो । उवयारमेत्तओ वा जह लोए सालिकरणाई ॥३३४४॥
खेत्ते व जत्थ करणं ति खित्तकरणं तयं जहा सिद्धं । खित्तं पुण्णमिणं पुण्णकरणसंबंधमेत्तेणं ॥३३४५॥

( इह द्रव्यमेव निवासमात्रपर्यायभावतः क्षेत्रम् । भण्यते नभो न तस्य च करणं निर्वृत्तितोऽभिहितम् ॥ ३३४३ ॥)
( भवेद् वा पर्यायात् पर्यायो येन द्रव्यतोऽनन्यः । उपचारमात्रतो वा यथा लोके शालिकरणादि ॥ ३३४४ ॥ )
( क्षेत्रे वा यत्र करणमिति क्षेत्रकरणं तद् यथा सिद्धम् । क्षेत्रं पुण्यमिदं पुण्यकरणसम्बन्धमात्रेण ॥ ३३४५ ॥ )

व्याख्या–इह द्रव्यमेव सद् नभः क्षेत्रं भण्यते । कुतः इत्याह– 'निवासे'त्यादि, मात्रशब्दस्य व्यवहितः प्रयोगः, निवासपर्यायभावमात्रत इत्यर्थः । इदमुक्तं भवति–'क्षि निवास गत्योः' इति 'क्षियन्ति निवसन्ति जीवा अजीवाश्चात्र' इत्यौणादिके त्रप्रत्यये क्षेत्रम्, इत्यस्मादन्वर्थाद् द्रव्यमपि नभः क्षेत्रमुच्यते । तस्य च नभसो निर्वृत्तितो निष्पादनेन करणं नाभिहितम्, अकृत्रिमत्वादस्येति । यदि तस्य करणं नास्ति, तर्हि करणभेदेषु पाठः किमर्थः ? इत्याशङ्क्याह– 'होज्ज वे'त्यादि भवेद् वा क्षेत्रस्यापि करणं 'पज्जायाउ' त्ति, घट-पटादिसंयोग-वियोगादिपर्यायानाश्रित्येत्यर्थः । पर्याया हि सर्वेषामपि वस्तूनामनित्या इत्यतस्तेषां करणमपि सम्भवति । यदि नाम पर्यायाणां करणं सम्भवति, तर्हि द्रव्यस्य किमायातम् ? इत्याह– पर्यायो येन द्रव्यादनन्योऽभिन्नस्तेन पर्यायस्य करणं द्रव्यस्यापि करणं भवत्येवेति । उपचारतो वा क्षेत्रकरणं भण्यते । 'जह लोए सालिकरणाइ' त्ति, यथा लोके वक्तारो भवन्ति–'शालिक्षेत्रमिक्षुक्षेत्रं वा मया कृतम्' इत्यादि । अथवा 'क्षेत्रस्य करणम्' इति षष्ठीतत्पुरुषो न क्रियते, किन्तु क्षेत्रे करणं क्षेत्रकरणमिति सप्तमीतत्पुरुष इति दर्शयन्नाह– 'खेत्ते वे'त्यादि अथवा, यत्र क्षेत्रे करणं पुण्यादेस्तत् क्षेत्रकरणम्; यथा लोकेऽपि सिद्धमेतत्– 'पुण्यमिदमुज्जयन्त-शत्रुञ्जयादिक्षेत्रं, पुण्यकरणसंबन्धमात्रेण, तत्र हि ये दाना ऽनशनादिकं कुर्वन्ति, तेषां महत् पुण्यं भवति, इत्यतः पुण्यस्य तत्र करणात् पुण्यं क्षेत्रं तदिति । उक्तं क्षेत्रकरणम् ॥ ॥ ३३४३–३३४४–३३४५ ॥

अथ कालकरणं वाच्यम् । तत्र कालस्याप्यकृत्रिमत्वात् करणं नास्ति, द्रव्यपर्यायत्वविवक्षया तस्य तद् भवेद् वेति दर्शयति–

कालकरणम्

जं वत्तणाइरूवो कालो दव्वस्स चेव पज्जाओ । तो तेण तस्स तम्मि व न विरुद्धं सव्वहा करणं ॥३३४६॥

( यद् वर्तनादिरूपः कालो द्रव्यस्यैव पर्यायः । ततस्तेन तस्य तस्मिन् वा न विरुद्धं सर्वथा करणम् ॥ ३३४६ ॥ )

यस्मात् प्रागुक्तस्वरूपो वर्तमानादिरूपः कालो द्रव्यस्यैव पर्यायः, पर्यायश्च द्रव्यादभिन्नः, ततो यथा द्रव्यस्य तथा तस्यापि करणं न

चराणि बवबालवादिसप्त-करणानि

निरुद्धम् । कथमित्याह– तेन कालेन, तस्य वा, तस्मिन् वेत्यादिभि' सर्वथा सर्वैरपि प्रकारैरिति ॥ ३३४६ ॥

अथवा, ज्योतिष्कमार्गप्रसिद्धमेवेह कालकरण गृह्यत इति दर्शयति—

**अहवेह कालकरणं ववाइ जोइसियगइविसेसेणं। सत्तविहं तत्थ चरं चउव्विहं थिरमक्खायं ॥३३४७॥**

( अथवेह कालकरण ववादि ज्यौतिपिकगतिविशेषेण । सप्तविध तत्र चर चतुर्विध स्थिरमाख्यातम् ॥ ३३४७ ॥ )

अथवा, बवबालवादिरूप चन्द्रा ऽऽदित्यादिज्योतिपिकदेवगतिविशेषेण यद् भवति तदिह कालकरण गृह्यते । तत्र च ववादिरूपे कालकरणं सप्तविध चरम्, अन्यान्यतिथिषु भावात्, चतुर्विधं तु स्थिरमाख्यातम्, नियतास्वेव तिथिषु भावादिति ॥ ३३४७ ॥

तत्र यत् सप्तविध चर तदाह—

**ववं च वालवं चेव कोलवं तीइलो य णं। गरो हि वणियं चेव विट्ठी हवइ सत्तमा ॥ ३३४८ ॥**

( बव च वालव चैव कौलवस्तैतिलश्च । गरो हि वणिजश्चैव विष्टिर्भवति सप्तमी ॥ ३३४८ ॥ )

अस्य सप्तविधस्यापि चरस्य करणस्यानयनोपायमाह—

**पक्खतिहओ दुगुणिया दुरूवरहिया य सुक्कपक्खम्मि। सत्तहिए देवसियं तं चिय रूवाहियं रत्तिं ॥३३४९**

( पक्षतिथयो द्विगुणिता द्विरूपरहिताश्च शुक्लपक्षे । सप्तहृते दैवसिक तदेव रूपाधिक रात्रौ ॥ ३३४९ ॥ )

कृष्णस्य शुक्लस्य वा प्रस्तुतपक्षस्य यास्तिथयोऽतिक्रान्तास्ता द्विगुणीक्रियन्ते । ततश्चागतराशेः सप्तभिर्भागो ह्रियते । एवं च कृते यत् करणमागच्छति तत् प्रस्तुततिथौ कृष्णपक्षे दैवसिक विज्ञेयम्, रूपाधिक तु तदेव रात्रौ, यथा कृष्णदशम्या द्विगुणिताया विंशतिर्भवति । ततः सप्तभिर्भागे हृते पटवशेषा भवन्ति । तथा चेद पष्ठ वणिजभिधान दैवसिक करण लब्धम्, रूपे तत्र प्रक्षिप्ते रात्रिगत विष्ट्यभिधान सप्तम करण लभ्यते । एवमन्यत्रापि कृष्णपक्षे द्रष्टव्यम् । शुक्लपक्षे विशेषमाह– 'दुरूवरहिया य सुक्कपक्खम्मि' त्ति, शुक्लपक्षे द्विगुणित-तिथिराशेद्वौ पात्येते, ततो दैवसिक करणमागच्छति, रूपाधिक तु रात्रिगत भवति, यथा शुक्लचतुर्थ्यां द्विगुणितायामष्टौ भवन्ति, द्वयोश्च पातितयोः षड् भवन्ति, सप्तभिश्च भागो न पूर्यते, ततस्तदेव दैवसिकं षष्ठ करण लब्धम्, रूपे तु प्रक्षिप्ते सप्तम विष्ट्यभिधान रात्रिगतं करण लभ्यते । एवमन्यत्रापि शुक्लपक्षे भावनीयम् । इह च लोकप्रसिद्धकरणानयनोपायोऽन्योऽपि विद्यते, तद्यथा– "तिहि दुगुणी, एक्कहिं ऊणी सत्तहिं हरण, सेस करणं" ( तिथिर्द्विगुणा, एकेनोना, सप्तभिर्हरणं, शेष करणम् ) इति । अयमपि युक्तः, केवलमिह मास तिथयो द्विगुणयितव्याः, यच्चेहागच्छति तद् रात्रिकरणम् (प्र०...रात्रिगत करण), रूपे तु पातिते दिवसगतं द्रष्टव्यमिति ॥ ३३४१ ॥ अथ चतुर्विधं स्थिरकरणमाह—

भावकरणाहिगारे किमिहं सद्दाइदव्वकरणेणं। भण्णइ तत्थवि भावो विवक्खिओ तव्विसिट्ठो उ ।३३५८।

( भावकरणाधिकारे किमिह शब्दादिद्रव्यकरणेन । भण्यते तत्रापि भावो विवक्षितस्तद्विशिष्टस्तु ॥ ३३५८ ॥ )

नन्विह भावकरणाधिकारे किमप्रस्तुतेन शब्दादिद्रव्यकरणोपन्यासेन ? । आदिशब्दः शब्दगतानेकभेदसंग्राहकः । भण्यतेऽत्रोत्तरम्– तत्रापि शब्दद्रव्यकरणे भाव एव भावश्रुतमेव विवक्षितम् । कथंभूतो भावः ? तद्विशिष्टः शब्दविशिष्टः । अयमभिप्रायः– प्रकाशपाठादिके शब्दकरणेऽपि न केवलः शब्द एव विवक्षितः, किन्तु यत् तस्य शब्दस्य कारणरूपं कार्यरूपं च भावश्रुतं तदेव शब्दविशिष्टमिह विवक्षितमित्यदोष इति ॥ ३३५८ ॥ उक्तं श्रुतकरणम् ॥ अथ नोश्रुतकरणमाह—

नोश्रुतकरणम्

नोसुयकरणं दुविहं गुणकरणं जुंजणाभिहाणं च। गुणकरणं तव-संजमकरणं मूलुत्तरगुणा वा ३३५९

( नोश्रुतकरणं द्विविधं गुणकरणं योजनाभिधानं च । गुणकरणं तपःसंयमकरणं मूलोत्तरगुणा वा ॥ ३३५९ ॥ )

नोशब्दस्य सर्वनिषेधवचनत्वात् श्रुतव्यतिरिक्तं यत् तपःसंयमादिरूपस्य जीवभावस्य करणं तद् नोश्रुतभावकरणम् । तच्च द्विविधम्- गुणकरणम्, तथा, 'जुंजणाभिहाणं' ति युज्यन्त इति योगा मनःप्रभृतयस्तेषां यत् करणं तद् योजनाभिधानं करणमिति । तत्र गुणकरणं तपःसंयमयोः करणम्, अथवा, मूलगुणकरणम्, उत्तरगुणकरणं च गुणकरणमुच्यत इति ॥ ३३५९ ॥ अथ योगकरणव्याख्यानमाह—

मण-वयण-कायकिरिया पन्नरसविहा उ जुंजणाकरणं। सामाइयकरणमिणं किं नामाईण होज्जाहि? ३३६०

( मनो-वचन-कायक्रिया पञ्चदशविधा तु योजनाकरणम् । सामायिककरणमिदं किं नामादीनां भवेत् ॥ ३३६० ॥ )

सत्यादिभेदतश्चतुर्विधं मनः, चतुर्विधं (प्र० ०विधं च) वचनम्, औदारिकमिश्रादिभेदात् सप्तविधः काय इत्येवमेतत्क्रियापि पञ्चदशविधा योजनकरणत्वेनावगन्तव्या । तदेवमवसितं भावकरणम् । तदवसाने चोक्तं नामादिभेदतः षड्विधमपि करणमिति । अथ विनेयः पृच्छति– ननूक्तस्वरूपाणां नामादीनां षण्णां करणभेदानां मध्ये सामायिककरणमिदं किं भवेत् ?– कस्मिन् भेदेऽवतरेत् ? इत्यर्थः ॥३३६०॥

सामायिककरणं नामादिषु कुत्रावतरति ?

अत्र गुरुराह—

सव्वं पि जहाजोगं नेयं भावकरणं विसेसेणं। सुय-बद्ध-सद्दकरणं सुयसामाइयं न चारित्तं ॥३३६१॥

( सर्वमपि यथायोगं ज्ञेयं भावकरणं विशेषेण । श्रुत-बद्ध शब्दकरणं श्रुतसामायिकं न चारित्रम् ॥ ३३६१ ॥ )

इदं सामायिककरणं सर्वमपि षड्विधमपि नामादिकरणं ज्ञेयम्– सर्वेष्वपि नामादिभेदेष्ववतरेदित्यर्थः । कथं ? यथायोगं यथागमम् । तत्र सम्यक्त्व श्रुत-तपः संयमादिगुणानां जीवद्रव्यपर्यायत्वात्, पर्यायस्य च द्रव्यानन्यत्वाद् द्रव्यकरणमिदं भवत्येव । एवं नामादिकरणान्यपि यथागमं भावनीया । भावकरणं । त्विदं विशेषतो भवति, सम्यक्त्वादिसामायिकानां जीवभावत्वादिति । आह– ननु भावकरणे

पूर्वं बहुभेदमुक्तम्, तत् किं सर्वेष्वपि भावकरणभेदेषु सर्वमपि सामायिकमवतरति ?। नेत्याह– 'सुए'त्यादि श्रुतकरण, तथा नद्धश्रुतकरण, शब्दकरण च श्रुतसामायिकमेव भवति, तस्यैवैतद्भेदरूपताघटनात्, न तु चारित्रसामायिकम्, तस्यैतद्रूपासम्भवादिति ॥ ३३६१ ॥

चारित्रसामायिक तर्हि कस्मिन् भावकरणभेदेऽवतरति ? इत्याह—

**गुणकरणं चारित्तं तव-संजमगुणमयं ति काऊणं। संभवओ सुयकरणं सुपसत्थं जुंजणाकरणं ॥३३६२॥**

( गुणकरण चारित्रं तप संयमगुणमयमिति कृत्वा । सम्भवत श्रुतकरणं सुप्रशस्त योजनाकरणम् ॥ ३३६२ ॥ )

गुणकरण चारित्रसामायिक गुणकरणलक्षणे नोश्रुतभावकरणे प्रथमभेद एतदवतरतीत्यर्थः, तपः संयमगुणात्मकमिति कृत्वा, संभवतो यथासम्भव श्रुतकरणमप्येतद् भवति। प्रशस्तवाग्रूपायाश्चारित्रभेदभूताया वाक्समितेरत्रावतारादिति। तथा, सुप्रशस्तं योजनाकरणमिति नोश्रुतभावकरणद्वितीयभेदेऽप्येतदवतरतीत्यर्थः, सुप्रशस्तमनो वाक्-कायरूपत्वाच्चारित्रस्य ॥ इति चतुःषष्टिगाथार्थः ॥ ३३६२ ॥ इह च 'करणे भए य अंते' इत्यादिगाथायाः समनन्तर 'नामं ठवणा दविए' इत्यादिका बह्व्यो गाथा निर्युक्तौ दृश्यन्ते, ताश्च भाष्यकारेण प्रक्षेपरूपत्वादिना केनापि कारणेन प्रायो न लिखिताः, केवल तदर्थ एव भाष्यगाथाभिर्लिखित., तदत्र कारणं स्वधियाऽभ्यूह्यमिति। तदेवं व्याख्यात 'करणे भए य अंते' इत्यादिगाथायाः करणलक्षण प्रथमं पदम्। करण चेह सामायिकस्यैव प्रस्तुतम्, 'करोमि भदन्त ! सामायिकम्' इति सम्बन्धात्। अतस्तदेव सामायिककरणमव्युत्पन्नविनेयवर्गव्युत्पादनार्थं सप्तभिरनुयोगद्वारैः कृताकृतादिभिर्निरूपयन्नाह—

**कयाकयं, केण कयं, केसु व दव्वेसु कीरई वावि। काहे व कारओ, नयओ, करणं कइविहं, कहं, व ? ।३३६३।**

( कृताकृतं, केन कृतं, केषु वा द्रव्येषु क्रियते वापि। कदा वा कारको, नयत, करणं कतिविध, कथ, वा ? ॥ ३३६३ ॥ )

'कयाकयमित्यादि'। ननु करणक्रियायाः पूर्वं सामायिक किं कृत क्रियते, अकृतं वा ? उभयथापि वक्ष्यमाणदोषः। अत्रोत्तरमाह– 'कयाकय' त्ति नैकान्तेन कृतं क्रियते, नाप्यकृतम्, किन्तु कृताकृत क्रियत इति। तथा, केन कृतमिति वक्तव्यम्। तथा, केषु द्रव्येष्विष्टेषु क्रियते। कदा वा कारकोऽस्य भवति। 'नयउ त्ति' नैगमादिनयमतेनात्रोत्तर वक्तव्यम्। तथा, करण 'कतिविधं' कतिभेदमिति वाच्यम्। तथा, 'कथ' केन प्रकारेणेद सामायिककरण लभ्यते इति चाभिधानीयम् ॥ इति निर्युक्तिगाथासंक्षेपार्थ. ॥ ३३६३ ॥

विस्तारार्थं तु भाष्यकार आह—

**कयमकयं कीरइ किंचातो भणइ सव्वहा दोसो। कयमिह सब्भावाओ न कीरए चिरकयघडु व्व॥**

( किं कृतमकृतं क्रियते किञ्चातो भणति सर्वथा दोष। कृतमिह सद्भावाद् न क्रियते चिरकृतघट इव ॥ ३३६४ ॥ )

सामायिक कृतं क्रियते अकृतं वा ? उभयथानुपपत्ति

निच्चकिरियापसंगो किरियावेफल्लमपरिणिट्ठा वा। अकय-कय-कज्जमाणव्ववएसाभावया निच्चे ॥३३६५॥

( नित्यक्रियाप्रसङ्गः क्रियावैफल्यमपरिनिष्ठा वा । अकृत कृत क्रियमाणव्यपदेशाभावता नित्ये ॥ ३३६५ ॥ )

व्याख्या–किं कृतं क्रियते सामायिकम्, अकृतं वा ? । किञ्चातः ?– किमनेन प्रश्नेन ? इति गुरुणा प्रोक्ते भणति परः, सर्वथा पक्षद्वयेऽपि दोषः, तथाहि– कृतं तावद् न क्रियते, सद्भावादग्रेऽपि विद्यमानत्वात्, चिरकृतघटवदिति । कृतस्य च करणे नित्यं क्रियायाः करणस्य प्रसङ्गः, क्रियायाश्च वैफल्यम्, कृतत्वादेवेति । अथ कृतमपि क्रियते, तर्हि करणस्यापरिनिष्ठा, कृतत्वाविशेषादिति । अपिच, 'कृतं क्रियते' इत्युच्यमाने वस्तुनः सर्वदैव सत्त्वमभ्युपगतं भवति, यच्च सर्वदा सत् तदाकाशवद् नित्यम्, नित्ये च वस्तुन्यकृतमिदम्, कृतं वा, क्रियमाणं वा इत्यादिव्यपदेशो न भवति, अनित्यत्वप्रसङ्गादिति ॥ ३३६४ ३३६५ ॥ अकृतपक्षमङ्गीकृत्याह–

अकयं पि नेय कीरइ अच्चंताभावओ खपुप्फं व। निच्चकिरियाइदोसा सविसेसयरा व सुत्तम्मि।३३६६

( अकृतमपि नैव क्रियतेऽत्यन्ताभावतः खपुष्पमिव । नित्यक्रियादिदोषाः सविशेषतरा वा सूत्रे ॥ ३३६६ ॥ )

स्पष्टा (प्र० . अकृ क्रियतामिदम्) ॥ ३३६६ ॥ अथ क्रियमाणं क्रियते, तत्राह–

सदसदुभयदोसाओ सव्वं कीरइ न कज्जमाणं पि। इय सव्वहा न कीरइ सामाइयमओ कओ करणं ?॥

( सदसदुभयदोषेभ्यः सर्वं क्रियते न क्रियमाणमपि । इति सर्वथा न क्रियते सामायिकमतः कुतः करणम् ? ॥ ३३६७ ॥ )

ननु क्रियमाणं वस्तु सद्वाऽसद् वा परिकल्प्येत ? । यदि सत्, तर्हि कृतपक्षोक्ताः सर्वेऽपि दोषाः प्रसजन्ति । असत्पक्षे त्वकृतपक्षदोषानुषङ्गः । अथ सदसत् क्रियमाणमिष्यते, तदप्ययुक्तम्, उभयपक्षोक्तदोषप्रसङ्गादिति । एवं सर्वथा सर्वप्रकारैः सामायिकं न क्रियते । अतः कुतस्तस्य करणम् ? इति ॥ ३३६७ ॥ अत्रोत्तरमाह–

करणप्रतिषेध कृतं क्रियते अकृतो वा ?

नणु सव्वहा न कीरइ पडिसेहम्मि वि समाणमेवेदं। पडिसेहस्साभावे पडिसिद्धं केण सामइयं ?।३३६८

अह कयमकयं न कयं न कज्जमाणं कहं तहावि कयं। पडिसेहवयणमेयं तह सामइयं पि को दोसो ?॥

( ननु सर्वथा न क्रियते प्रतिषेधेऽपि समानमेवेदम् । प्रतिषेधस्याभावे प्रतिषिद्धं केन सामायिकम् ॥ ३३६८ ॥ )

( अथ कृतमकृतं न कृतं न क्रियमाणं कथं तथापि कृतम् । प्रतिषेधवचनमेतत् तथा सामायिकमपि को दोषः ? ॥ ३३६९ ॥ )

व्याख्या– ननु सर्वथा सर्वप्रकारैः सामायिकं न क्रियते इत्येवं यस्त्वया प्रतिषेधो विधीयते, तत्रापि प्रतिषेधे समानमेवेदम्– किमसौ कृतः क्रियते, अकृतः, क्रियमाणो वा ?, त्वदुक्तन्यायेन सोऽपि सर्वथा न क्रियते । अतः प्रतिषेधाभावे केन प्रतिषिद्धं सामायिकम् ? न केनचित्; अतः क्रियत एवेतदिति । अथैवं ब्रूषे प्रतिषेधवचनमेतत् कृतं वा सद्, अकृतं वा सद् न कृतम्, नापि क्रियमाणं कृतम्, तथापि,

कृतं तावत् केनाप्युच्चारणादिना प्रकारेण । हन्त ! यथा केनापि प्रकारेण त्वयैतत् कृतं तथा सामायिकमपि केनापि प्रकारेण कृतम्, अत-स्तत्रापि को दोषस्त्वया दीयते ? इति ॥ ३३६८-३३६९ ॥ अथ कृताकृतपक्षं नयमतेनोपदर्श्य सिद्धान्तपक्षमुपदर्शयन्नाह—

नैगमादीनामकृतम्, ऋजुसूत्रादीनां तु कृतं क्रियते

**अकयमसुद्धनयाणं निच्चत्तणओ नभं व सामाइयं । सुद्धाण कयं घड इव कयाकयं समयसब्भावो ॥३३७०॥**

(अकृतमशुद्धनयानां नित्यत्वतो नभ इव सामायिकम् । शुद्धानां कृतं घट इव कृताकृतं समयसद्भावः ॥ ३३७० ॥)

अशुद्धनयानां नित्यत्वतो नभ इव सामायिकम् । शुद्धानां तु निश्चयनयरूपाणा-द्रव्यार्थिकरूपाणामशुद्धनयानां नैगम संग्रह-व्यवहाराणामकृतं सामायिकम्, नित्यत्वात्, नभोवदिति । शुद्धानां तु निश्चयनयरूपाणा-मृजुसूत्रादीनां कृतं तत्, घटवदिति । समयसद्भावस्त्वयम्— नैकान्तेन कृतं सामायिकं क्रियते, नाप्यकृतम्, किन्तु कृताकृतं क्रियत इति ॥ ॥ ३३७० ॥ यदि वा, सिद्धान्तस्थित्या विवक्षावशात् कृतादिभिश्चतुर्भिरपि भङ्गैः किञ्चिद् वस्तु क्रियते, किञ्चित् त्वेतैश्चतुर्भिरपि भङ्गैर्न क्रियत एवेति दर्शयन्नाह—

**कीरइ कयमकयं वा कयाकयं वेह कज्जमाणं वा । कज्जमिह विवक्खाए न कीरए सव्वहा किंचि ॥३३७१॥**

(क्रियते कृतमकृतं वा कृताकृतं वेह क्रियमाणं वा । कार्यमिह विवक्षया न क्रियते सर्वथा किञ्चित ॥ ३३७१ ॥)

इह किञ्चित् कार्यं केनापि रूपेण कृतं क्रियते, केनचिद्रूपेणाकृतं क्रियते, केनापि तु रूपेण कृताकृतं क्रियते, केनचित् प्रकारेण क्रियमाणं वा किञ्चित् क्रियते; अन्यत्तु किञ्चिद् विवक्षया सर्वैरपि कृतादिभिः प्रकारैर्न क्रियत इति ॥३३७१॥ अत्र यथासंख्यमुदाहरणम्—

कृत-अकृत-उभयक्रियमाणानां न्यायाता

**रूवि त्ति कीरइ कओ कुंभो संठाणसत्तिओ अकओ । दोहि वि कयाकओ सो तस्समयं कज्जमाणो त्ति ॥३३७२॥**

**पुव्वकओ उ घडतया परपज्जाएहिं तदुभएहिं च । कज्जंतो य पडतया न कीरए सव्वहा कुंभो ॥३३७३॥**

(रूपीति क्रियते कृतः कुम्भः संस्थानशक्तितोऽकृतः । द्वाभ्यामपि कृताकृतः स तत्समयं क्रियमाण इति ॥ ३३७२ ॥)

(पूर्वकृतस्तु घटतया परपर्यायैस्तदुभयैश्च । क्रियमाणश्च पटतया न क्रियते सर्वथा कुम्भः ॥ ३३७३ ॥)

व्याख्या— 'रूपी' इति कृत्वा पूर्वं कृत एव कुम्भस्तद्रूपतया क्रियते, मृत्पिण्डावस्थायामपि रूपादीनां सद्भावादिति । संस्थानजला-हरणशक्तिभ्यां पूर्वमकृतः क्रियते । रूपतया संस्थानशक्तितश्चेति रूपद्वयेनापि विवक्षितोऽसौ पूर्वं कृताकृतः क्रियते । तत्समयमुत्पत्तिसमये क्रियमाणोऽसौ क्रियत इति । पूर्वकृतस्तु पूर्वं निष्पन्नो घटो घटतया स्वपर्यायेण न क्रियते, परपर्यायैस्तु पटादिधर्मैः पूर्वमकृतो घटो न क्रियते, परपर्यायैस्तेषु कर्तुमशक्यत्वात्; तदुभयैस्तु स्वपरपर्यायैर्विवक्षितः कृताकृतोऽसौ न क्रियते, स्वपर्यायाणां पूर्वमेव कृतत्वात्; पर-पर्यायाणां तु पूर्वमप्यकृतानां कर्तुमशक्यत्वात् । क्रियमाणोऽप्युत्पत्तिसमये कुम्भः पटतया न क्रियते, अशक्यत्वात् । तदेवं सर्वथा सर्वैरपि प्रकारैः कुम्भो न क्रियते, यथोक्तविवक्षया कृतोऽकृतः कृताकृतः क्रियमाणश्च कुम्भो न क्रियत इत्यर्थः । तदेवं यथाभिहितविवक्षया

क्रियमाणत्वमक्रियमाणत्वं च वस्तुनः प्रोक्तम् ॥३३७२-३३७३॥ अथवा, विवक्षान्तरेण सर्ववस्तूनां क्रियमाणत्वमक्रियमाणत्वं च दर्शयितुमाह—

**वोमाइ निच्चयाओ न कीरइ दव्वयाइ वा सव्वं। कीरइ य कज्जमाणं समए सव्वं सपज्जयओ॥३३७४॥**

(व्योमादि नित्यतातो न क्रियते द्रव्यतया वा सर्वम्। क्रियते च क्रियमाण समये सर्वं स्वपर्ययत ॥ ३३७४ ॥)

इह व्योमाऽऽत्म काल-दिगादिकं वस्तु न क्रियते, नित्यत्वात्। अथवा, व्याप्त्या सर्वमपि व्योमादि घट-विद्युद् वन-कुसुमादि च वस्तु न क्रियते, द्रव्यतया सर्वस्य सर्वदाऽवस्थितत्वात्। पर्यायतया तु प्रतिसमय सर्वं वस्तु, क्रियमाण क्रियते, सर्वस्यापि समये समयेऽपरापरस्वपर्यायाणामुत्पादादिति ॥ ३३७४ ॥ समयसद्भावव्यक्तीकरणपूर्वक प्रकृतयोजनामाह—

सर्वं कृताकृतं क्रियते

**उप्पाय-ट्ठिई-भंगस्सभावओ इय कयाकयं सव्वं। सामाइयं पि एवं उप्पायाइस्सहावं ति ॥३३७५॥**

(उत्पाद स्थिति भङ्गस्वभावत इति कृताकृतं सर्वम्। सामायिकमप्येवमुत्पादादिस्वभावमिति ॥ ३३७५ ॥)

उत्पाद स्थिति भङ्गस्वभावत्वादित्युक्तप्रकारेण सर्वमपि वस्तु कृताकृतस्वरूपम्, एवं सामायिकमप्युत्पादादिस्वभावत्वात् कृताकृतस्वरूपं द्रष्टव्यम्। अतः 'कृताकृत क्रियते' इति स्थितम् ॥ ३३७५ ॥ अत्र परः प्राह—

*** नणु दव्वमणत्थंतरपज्जायंतरविसेसणेहिं जुज्जेज्ज। उप्पायाइसहावं न उ सामाइयं गुणो जम्हा॥**

**सो उप्पण्णो उप्पण्ण एव विगओ य विगय एवेह। किं सेसमस्स जेणिह कयाकयादेसया होज्जा? ३३७७**

(ननु द्रव्यमनर्थान्तरपर्यायान्तरविशेषणैर्युज्येत। उत्पादादिस्वभाव न तु सामायिक गुणो यस्मात् ॥ ३३७६ ॥)

(स उत्पन्न उत्पन्न एव विगतश्च विगत एवेह। किं शेषमस्य येनेह कृताकृतादेशता भवेत्? ॥ ३३७७ ॥)

ननु द्रव्यमनर्थान्तरभूतपर्यायान्तरविशेषणैरुत्पादादिस्वभाव युज्यते, न तु सामायिकम्, 'गुणो जम्हा' त्ति गुणमात्ररूपत्वादिति। स हि गुण उत्पन्नः समुत्पन्न एव, न तु विगतोऽवस्थितो वा; यदा तु विगतस्तदा विगत एव, न तूत्पन्नोऽवस्थितो वा। अतः किं शेषमस्योद्धृतम् (प्र० ०स्योद्धरितम्) येनेह कृताकृतादेशता कृताकृतरूपता स्यात्? इति ॥ ३३७६–३३७७ ॥ सूरिरुत्तरमाह—

**जं चिय दव्वाणन्नो पज्जाओ तं च तिविहसब्भावं। तो सो वि तिरूवो च्चिय तत्तो य कयाकयसहावो।३३७८।**

पर्यायस्यापि कृताकृतता

(यदेव द्रव्यानन्य पर्यायस्तच्च त्रिविधसद्भावम्। तत सोऽपि त्रिरूप एव ततश्च कृताकृतस्वभाव ॥ ३३७८ ॥)

यस्मादेव पर्यायो द्रव्यानन्यः, तच्च द्रव्यमुत्पाद-व्यय ध्रौव्यलक्षणत्रिविधस्वभावम्, ततो द्रव्यानन्यत्वात् सोऽपि पर्यायस्त्रिरूप एव, अतश्च द्रव्यवत् कृताकृतस्वभावः स्यादेवेति ॥३३७८॥ अथवा, स्वतन्त्रस्यापि सामायिकगुणस्य त्रिरूपता घटत एवेति। कथम्? इत्याह—

* अत्र 'नणु' पदमनादृत्यैकं श्लोकं गाथामात्रप्रमाणा दृश्यते।

जह वा रूवंतरओ विगमुप्पाए वि रूवसामण्णं। निच्चं कयाकयमओ रूवं परपज्जयाओ वा॥ ३३७९॥

तह परिणामंतरओ वय-विभवे वि परिणामसामण्णं। निच्चं कयाकयमओ सामइयं परगुणाओ वा ।३३८०

( यथा वा रूपान्तरतो विगमोत्पादयोरपि रूपसामान्यम्। नित्य कृताकृतमतो रूप परपर्यायाद् वा ॥ ३३७९ ॥ )

( तथा परिणामान्तरतो व्यय विभवयोरपि परिणामसामान्यम्। नित्य कृताकृतमत सामायिक परगुणाद् वा ॥ ३३८० ॥ )

यथा वा घटादौ रक्तत्वादिरूपाच्छुक्लत्वादिरूपान्तरोत्पत्तौ पूर्वरूपस्य विगमे उत्तररूपस्योत्पादेऽपि रूपसामान्य नित्यमवतिष्ठते, अतो रूपगुणस्य त्रिरूपता, अस्माच्च त्रैरूप्यात् कृताकृत रूपं युज्यते। परपर्यायाद् वा परपर्यायमाश्रित्य कृताकृत युज्यत इति। तथोत्तरोत्तरशुद्ध्या परिणमतः सामायिकगुणस्य परिणामान्तरात् परिणामान्तरोत्पत्तौ पूर्वपरिणामस्य व्यये विगमे, उत्तरपरिणामस्य तु विभवेऽप्युत्पादेऽपि, परिणामसामान्य नित्यमवतिष्ठते। ततः सामायिकगुणस्य त्रिरूपता। अस्माच्च त्रैरूप्यात् तस्य कृताकृतत्वम्; परगुणत्वाद् वा परगुण-माश्रित्य कृताकृतत्वमिति ॥ ३३७९-३३८० ॥ अथवा, अन्यथापि सामायिकस्य कृताकृतत्व वक्तव्यम्, कथम्? इत्याह—

चउक्कं वा पडुच्च कयमकयमहव सामइयं। एगपुरिसाइओ कयमकयं नाणानराईहिं ॥३३८१॥

( द्रव्यादिचतुष्क वा प्रतीत्य कृतमकृतमथवा सामायिकम्। एकपुरुषादित कृतमकृत नानानरादिभि ॥ ३३८१ ॥ )

अथवा, द्रव्यादिचतुष्क द्रव्य क्षेत्र काल भावचतुष्टयं प्रतीत्य कृतमकृतं च सामायिक भावनीयम्; तथाहि—एक विवक्षित पुरुषद्रव्यं प्रतीत्य कृत सामायिकम्, सादिसपर्यवसितत्वात्, नानापुरुषद्रव्याण्याश्रित्य पुनरकृतम्, अनाद्यपर्यवसितत्वादिति। आदिशब्दाद् भरतैरावत-क्षेत्राणि प्रतीत्य कृतम्, महाविदेहक्षेत्रेष्वकृतम्, अव्यवच्छिन्नप्रवाहत्वेन नित्यत्वादिति। तथा, उत्सर्पिण्य-ऽवसर्पिणीकालमाश्रित्य कृतम्, व्यवच्छिद्यमानत्वेनाऽनित्यत्वात्। नोउत्सर्पिण्यवसर्पिणीकाल त्वाश्रित्याकृतम्, अव्यवच्छिन्नत्वेन नित्यत्वात्। भाव त्वेकपुरुषोपयोग प्रतीत्य कृतम्, नानापुरुषोपयोगानाश्रित्य पुनरकृतम्। इत्येव वा कृताकृत सामायिकमिति ॥ ३३८१ ॥ तदेवमुक्त कृताकृतद्वारम् ॥

अथ 'केन कृतम्' इति द्वार विवक्षुराह—

केण कयं ति य ववहारओ जिणिंदेण गणहरेहि च। तस्सामिणा उ निच्छयनयस्स तत्तो जओऽणन्नं॥ केन कृतम्' द्वारम्

( केन कृतमिति च व्यवहारतो जिनेन्द्रेण गणधरैश्च। तत्स्वामिना तु निश्चयनयस्य ततो यतोऽनन्यत् ॥ ३३८२ ॥ )

पाठसिद्धा ॥ ३३८२ ॥ अत्राक्षेप-परिहारौ प्राह—

गमे कयं चिय केण कयं तं ति का पुणो पुच्छा?। भण्णइ, स वज्झकत्ता इहंतरंगो विसेसेणं ३३८३।

( ननु निर्गमे कृतमेव केन कृतं तदिति का पुन पृच्छा?। भण्यते, स बाह्यकर्ता इहान्तरङ्गो विशेषेण ॥ ३३८३ ॥ )

आह- ननु 'उद्देसे निद्देसे य निग्गमे' इत्यत्र सामायिकस्य निर्गमे भण्यमाने 'महावीरात् तन्निर्गतम्' इत्यादिप्रतिपादनेन 'केन कृतं तद्' इत्येतद् गतमेवोक्तार्थमेव, पुनरपीह का पृच्छा ? । भण्यतेऽत्रोत्तरम्-स तीर्थकरादिः सामायिकस्य बाह्यकर्ता तत्रोक्तः, इह तु निश्चयेनान्तरङ्गकर्ता विवक्षितः । स च नैश्चयिक सामायिकानुष्ठाता साध्वादिरेव, सामायिकपरिणामानन्यत्वादिति ॥ ३३८३ ॥

परिहारान्तरमाह—

सामायिककर्ता साध्वादि सर्वकारकानन्य

**अहवा सतंतकत्ता तत्थेह पउज्जकारगोऽभिमओ। अहवेह सव्वकारगपरिणामाणन्नरूवो त्ति॥ ३३८४**

(अथवा स्वतन्त्रकर्ता तत्रेह प्रयोज्यकारकोऽभिमत । अथवेह सर्वकारकपरिणामानन्यरूप इति ॥ ३३८४ ॥)

अथवा, तत्र निर्गमे भगवांस्तीर्थकरः स्वयम्बुद्धत्वात् स्वतन्त्रकर्ताऽभिहितः, इह तस्यैव भगवतस्तीर्थकरस्य यः प्रयोज्यः प्रबोधनीयः स इ[illegible] साध्वादि स कर्ताऽभिमत । अथवा, इह कर्ता सर्वकारकपरिणामानन्यरूपोऽभिमतः, स च साध्वादिरेव सामायिकानुष्ठाता मन्तव्यः; तथाहि, सामायिकं कुर्वन्नसौ कर्ता, क्रियमाणत्वेन च कर्मरूपात् सामायिकादनन्यत्वात् कर्म, सामायिक येनाध्यवसायेन करणभूतेनासौ करोति तस्मादनन्यत्वात् करणम्, गुरुणा चास्मै सामायिक प्रदीयत इति संप्रदानम्, सामायिक चास्मात् शिष्य प्रशिष्यपरम्परया प्राप्स्यत इत्यपादानम्, स्वपरिणामे च सामायिकमव्यवच्छिन्न धरतीत्यधिकरणमित्येव सर्वकारकपरिणामानन्यरूपः कर्ता भवत्यसाविति ।

गणधरादि प्रयोज्यकर्ता

आह—ननु यद्यन्तरङ्ग प्रयोज्य सर्वकारकपरिणामानन्यरूपश्च कर्ता साध्वादिरिह विवक्षितः, तर्हि 'जिनेन्द्रेण गणधरैश्च कृतं तद्' इति कस्मादुक्तम्, जिनेन्द्र-गणधराणामिहाविवक्षितत्वात् ? । सत्यम्, किन्तु जिनेन्द्रस्यापि सामायिकस्यान्तरङ्गकर्तृत्व सर्वकारकपरिणामानन्यरूपत्वं प्रायो न विरुध्यते, तेनापि तस्यानुष्ठितत्वात्, गणधराणा तु प्रयोज्यकर्तृत्वमपि युज्यत एव, जिनेन्द्रप्रयोज्यत्वात् तेषामिति । अतो जिनेन्द्र गणधराणाम[illegible]पन्यासोऽत्र न विरुध्यत इति ॥ ३३८४ ॥ गत 'केन कृतम्' इति द्वारम् ॥

अथ 'केषु द्रव्येषु तद् क्रियते' इति द्वारमभिधित्सुराह—

'केषु क्रियते' द्वारम

**दव्वेसु केसु कीरइ सामइयं नेगमो मणुण्णेसु। सयणाइएसु भासइ मणुण्णपरिणामकारणओ ॥३३८५**

(द्रव्येषु केषु क्रियते सामायिकं नैगमो मनोज्ञेषु । शयनादिकेषु भाषते मनोज्ञपरिणामकारणत ॥ ३३८५ ॥)

**नेगंतेण मणुन्नं मणुन्नपरिणामकारणं दव्वं । वभिचाराओ, सेसा बिंति तओ सव्वदव्वेसु ॥ ३३८६ ॥**

(नैकान्तेन मनोज्ञ मनोज्ञपरिणामकारणं द्रव्यम् । व्यभिचारात्, शेषा ब्रुवन्ति तत सर्वद्रव्येषु ॥ ३३८६ ॥)

व्याख्या- केषु द्रव्येषु व्यवस्थितस्य सामायिकं क्रियते निर्वर्त्यते ? । अत्र नैगमनयो भाषते-मनोज्ञेषु शयनाऽऽसनादिषु स्थितस्य तत् क्रियते, मनोज्ञपरिणामकारणत्वात् । तथा च [illegible]—"मणुन्नं भोयणं भोच्चा मणुन्नं सयणासणं । मणुन्नंसि अगारंसि(प० —णुन्नंसि

अगारसि)मणुन्नं झायए मुणी ॥ १ ॥' (मनोज्ञं भोजनं भुक्त्वा मनोज्ञं शयनासनम्। मनोज्ञेऽगारे मनोज्ञं ध्यायति मुनिः ॥) इत्यादि। शेषास्तु संग्रहादयो नुवते-नैकान्तेन मनोज्ञं द्रव्यं मनोज्ञपरिणामकारणं भवति, व्यभिचारात्, मनोज्ञेऽपि कस्यापि स्वाभिप्रायेणामनोज्ञपरिणामभावात्, अमनोज्ञेऽपि च कस्यापि मनोज्ञपरिणामसद्भावात्। ततः सर्वद्रव्येषु व्यवस्थितस्य सामायिकं क्रियते ॥ ३३८५-३३८६ ॥

अत्राक्षेप-परिहारावाह-

नणु भणियमुवग्घाए केसु त्तीहं कओ पुणो पुच्छा?। केसु त्ति तत्थ विसओ इह केसु ट्ठिअस्स तल्लाभो ॥

(ननु भणितमुपोद्घाते केष्वितीह कुतः पुनः पृच्छा?। केष्विति तत्र विषय इह केषु स्थितस्य तल्लाभः ॥ ३३८७ ॥)

ननूपोद्घाते 'किं कइविहं' इत्यादिगाथाया 'केषु सामायिकं भवति' इति भणितमेव, इह कुतः पुनरपि पृच्छावसरः?। नैवम्, तत्र हि केषु द्रव्यपर्यायाः सामायिकस्य विषये भवन्तीत्युक्तम्, तथा च तत्र निर्वचनम्- 'सव्वगयं सम्मत्तं' इत्यादि। इह तु केषु द्रव्येषु स्थितस्य सामायिकलाभो भवतीत्युच्यत इति महान् भेद इति ॥ ३३८७ ॥ यदि न पौनरुक्त्यम् तर्ह्यन्यद् दूषणम्। किं तत्? इत्याह-

सव्वदव्वावत्थाणं जाइमेत्तवयणाओ। धम्माइसव्वदव्वाधारो सव्वो जओऽवस्सं ॥३३८८॥

(ततः कथं सर्वद्रव्यावस्थानं जातिमात्रवचनात्। धर्मादिसर्वद्रव्याधारः सर्वो यतोऽवश्यम् ॥ ३३८८ ॥)

ततस्तर्हि कथं सर्वद्रव्येष्ववस्थानं सम्भवति, येनोच्यते-'सेसा चिति तओ सव्वदव्वेसु' इति। न हि सर्वेष्वाकाशादिद्रव्येषु कोऽप्यवतिष्ठत इति?। उच्यते-जातिमात्रवचनात् सर्वद्रव्यमात्रस्येह विवक्षणात्, जातिमात्रं च सर्वद्रव्यैकदेशेऽपि प्राप्यत इति। ननु देशतोऽपि किं सर्वद्रव्याधारः कोऽपि प्राप्यते?। उच्यते-प्राप्यत एव, यतो धर्मास्तिकायाऽधर्मास्तिकाया-ऽऽकाशास्तिकाय-जीव पुद्गलाधारः सर्वोऽप्यवश्यं जीवलोक इति परिहृतं प्रासङ्गिकं दूषणम् ॥ ३३८८ ॥ अथ प्रस्तुतप्रेर्यस्य परिहारान्तरमाह-

वसओ व उवग्घाए केसु त्ति इहं स एव हेउ त्ति। सद्धेय-नेय-किरियानिबंधणं जेण सामइयं ॥३३८९॥

(विषयो वोपोद्घाते केष्वितीह स एव हेतुरिति। श्रद्धेय ज्ञेय क्रियानिबन्धनं येन सामायिकम् ॥ ३३८९ ॥)

अथवा, उपोद्घाते सर्वद्रव्याणि सामायिकस्य विषये भवन्तीत्युक्तम्। इह तु स एव सामायिकलाभः सर्वद्रव्येषु हेतुभूतेषु भवतीत्युच्यते। कथं पुनः सर्वाण्यपि द्रव्याणि सामायिकस्य हेतुर्भवन्ति? इत्याह-'सद्धेये'त्यादि श्रद्धेयानि च ज्ञेयानि च चारित्रक्रियाहेतुभूतानि च यानि तन्निबन्धनं तद्धेतुकं येन सामायिकम्। न च श्रद्धेयादिभ्योऽन्यानि सर्वद्रव्याणीति, नापि विषयहेत्वोरैकत्वमवगन्तव्यम्, विषयस्यात्, जीवघातनिवृत्तेः सर्वजीवहेतोरुपष्टम्भकत्वात्, अन्नादिवदिति ॥ ३३८९ ॥ अन्यदपि परिहारान्तरमाह-

**कत्ता नयओऽभिहिओ अहवा नयउ त्ति नीइओ नेओ। सामाइयहेउपउज्जकारओ सो नओ य इमो॥**

( कर्ता नयतोऽभिहितोऽथवा नयत इति नीतितो ज्ञेय । सामायिकहेतुप्रयोज्यकारक स नयश्चायम ॥ ३३९५ ॥ )

तदेव सामायिकस्य कर्ता नयतो नयैरभिहित'। अथवा, 'कत्ता वा कारकः' इत्यस्माद् नय इति पृथगेव द्वारम् । तत्र चायमर्थः– नयतो नीतितो विविना सामायिकस्य हेतुः कर्ता सामायिकस्य प्रयोज्यकारको ज्ञेयः । कः पुनरसौ नय इत्याह–स चायम् नय इति द्वात्रिंशद्गाथार्थः ॥ ३३९५ ॥ अत्रापि 'उप्पणाणुप्पन्न कयाकय इत्य जइ नमोकारे' इत्यादिनियुक्तिगाथानामग्रहणे कारणं पूर्वोक्तमेव द्रष्टव्यम् । एवमुत्तरत्रापीति ॥अथ तमेव नयमष्टप्रकारमाह–

सामा० सत्का आलोचनादि नयाष्टकम

**आलोयणा य विणए खित्त दिसाभिग्गहे य काले य। रिक्ख-गुणसंपया विय अभिवाहारे य अट्ठमए॥**

( आलोचना च विनय क्षेत्र दिगभिग्रहश्च कालश्च । ऋक्ष-गुणसपदे अपि चाभिव्याहारश्चाष्टमक ॥ ३३९६ ॥ )

इहाभिमुख्येन गुरोरात्मदोषप्रकाशनमालोचना, विनयश्च बाह्य आसनदानाऽभ्युत्थानादि अन्तरङ्गस्तु बहुमानादिः, तथा, क्षेत्रमिक्षुक्षेत्रादि, तथा दिगभिग्रहश्च वक्ष्यमाणलक्षणः, कालश्च दिवसादिः, तथा, ऋक्षसंपद् नक्षत्रसंपदिति, गुणाः प्रियधर्मत्वादयस्तत्संपत् प्राप्तिरिति, अभिव्याहरणमभिव्याहारः कालिकादिश्रुतविषय उद्देश-समुद्देशादिरिति। अथ चाष्टमो नय. ॥ इति नियुक्तिगाथासक्षेपार्थः ॥३३९६॥

अथालोचनानयं भाष्यकारो विवृण्वन्नाह–

**सामाइयत्थमुवसंपया गिहत्थस्स होज्ज जइणो वा। उभयस्स पउत्तालोयणस्स(प्र० इयस्स)सामाइयं देज्जा**

( सामायिकार्थमुपसपद् गृहस्थस्य भवेद् यतेर्वा । उभयस्य प्रयुक्तालोचनस्य (लोचितस्य) सामायिक दद्यात् ॥ ३३९७ ॥ )

तत्र गृहस्थे–

१ आलोचनम दीक्षार्हद्रव्यादीनाम्

**यम्मि दिक्खारुहस्स गिहिणो चरित्तसामइयं । बालाइदोसरहियस्स देज्ज नियमा न सेसाणं॥**

( आलोचिते दीक्षार्हस्य गृहिणश्चारित्रसामायिकम् । बालादिदोषरहितस्य दद्याद् नियमाद् न शेषाणाम् ॥ ३३९८ ॥ )

स्पष्टे, नवर 'आलोइयम्मि' त्ति आलोचिते आलोकिते विज्ञाते यथा द्रव्यतो ज्ञातोऽसौ न नपुसकादिः, क्षेत्रतस्तु विज्ञातो यथा नायमकालतस्त्ववगतो यथा शीतो-ष्णादिना न क्लाम्यति, भावतस्त्ववबुद्धो यथा नीरोगानलसादिरूपः । ततश्चैवमालोकिते निश्चिते च दीक्षार्हस्य बालादिदोषरहितस्य गृहिणश्चारित्रसामायिकं दद्यादिति ॥ ३३९७–३३९८ ॥ ननु गृहस्थस्य सामायिकसूत्रार्थमुपसपदित्यवते, श्रमणस्य तु व्रतग्रहणकाल एवाधीतसामायिकसूत्रत्वात् कथं तदर्थमुपसपद् भवेत् ? इत्याह —

सामाइयत्थमवणोवसंपया साहुणो हवेज्जाहि । वाघायमेसकालं च पइ सुयत्थं पि होज्जाहि ॥३३९९॥ सामायिको-पसंपत् कथम् ?

( सामायिकार्थश्रवणोपसम्पत् साधोर्भवेत् । व्याघातमेष्यत्कालं च प्रति सूत्रार्थमपि भवेत् ॥ ३३९९ ॥ )

यदा गुरु ग्लानादिः भवति, यदि वाऽन्यो परलोकीभूतो भवेत्, तदा तच्छिष्यस्य साधोः सामायिकार्थश्रवणनिमित्तमन्यत्रोपसम्पद् भवेत् । अथवा, 'सुयत्थं पि होज्जाहि' त्ति व्याघातमेष्यत्कालं वा प्रति तां प्रतीत्येत्यर्थः सूत्रमात्रार्थमपि साधोरन्यत्रोपसंपद् भवेत् । इदमुक्तं भवति– ग्लानभावेन व्यन्तरोपसर्गादिना वा व्याघातेन पतिते विस्मृते सामायिकसूत्रे, एष्यति वा दुःषमाकाले प्रज्ञामान्द्यादसमाप्तसामायिकसूत्रमात्रा अपि साधवो भविष्यन्तो निजगुरुमरणाभवनादिना कारणेन सर्वस्यापि सामायिकसूत्रस्य पठनार्थम्, असमाप्तस्य वा समाप्त्यर्थमन्यत्र साधोरुपसंपद् भवेदिति ॥ ३३९९ ॥ तदेवं चारित्रसामायिकमङ्गीकृत्य तदर्थश्रवणार्थं तत्सूत्रमात्रपठनार्थं वा साधोरन्यत्रोपसंपदुक्ता ॥ अथवा, श्रुतसामायिकमङ्गीकृत्य समस्तद्वादशाङ्गसूत्रार्थोभयार्थमप्युपसंपद् भवेदिति दर्शयन्नाह—

सव्वं व बारसंगं सुयसामइयं ति तदुभयत्थं ति । होज्जालोइयभावस्स देज्ज सुत्तं तदत्थं वा ॥३४००॥

( सर्वं वा द्वादशाङ्गं श्रुतसामायिकमिति तदुभयार्थमिति । भवेदालोचितभावस्य दद्यात् सूत्रं तदर्थं वा ॥ ३४०० ॥ )

अथवा, सर्वमपि द्वादशाङ्गं श्रुतसामायिकं भण्यते, अतस्तदुभयार्थं समस्तद्वादशाङ्गसूत्रार्थोभयनिमित्तमप्युपसंपद् भवेत्; अत आलोचितभावस्य दत्तविशुद्धालोचनस्य सूत्रमर्थं वा दद्यादिति ॥ ३४०० ॥ उक्तमालोचनाद्वारम् ॥ अथ विनयद्वारमभिधित्सुराह—

विणयसुद्धस्स वि देज्ज विणीयस्स नाविणीयस्स । न हि दिज्जइ आहरणं पलियत्तियकन्नहत्थस्स ॥३४०१॥ १ विनयद्वारम्

( आलोचनशुद्धायापि दद्याद् विनीताय नाविनीताय । न हि दीयते आहरणं परिकर्तितकर्णहस्ताय ॥ ३४०१ ॥ )

सुगमा ॥ ३४०१ ॥ किमिति विनीतस्यैव दीयते ? इत्याह—

गुरुत्तो भत्तिगओ अमुई अणुअत्तओ विसेसन्नू । उज्जुत्तोऽपरितंतो इच्छियमत्थं लहइ साहू ॥३४०२॥

( गुरुरतो भक्तिगतोऽमोचकोऽनुवर्तको विशेषज्ञः । उद्युक्तोऽपरितान्त इष्टमर्थं लभते साधुः ॥ ३४०२ ॥ )

सुबोधा, नवरं 'अमुइ त्ति' अमोचकः, उद्युक्त उद्यमपरः, अपरितंतो– अनिर्विण्ण इति ॥ ३४०२ ॥ क्षेत्रद्वारमभिधित्सुराह— २ क्षेत्रद्वारम्

विणयवओ विय कयमंगलस्स तदविग्घपारगमणाय (प्र० ०णाए) ।

देज्ज सुकओवओगो खित्ताईसु (मु०प्र० पसत्थेसु) सुपसत्थेसु ॥३४०३॥

( विनयवतेऽपि च कृतमङ्गलाय तदविघ्नपारगमनाय । दद्यात् सुकृतोपयोगः क्षेत्रादिषु सुप्रशस्तेषु ॥ ३४०३ ॥ )

उच्छुवणे सालिवणे पउमसरे कुसुमिए व वणसंडे। गंभीर सोणुणाए पयाहिणजले जिणहरे वा ३४०४
दिज्ज न उ भग्ग-ब्भामिय-(प्र० ज्झामिय)मसाण-सुन्नामणुन्नगेहेसु। छारंगारक्खयारामेज्झाईदव्वदुट्ठेसु

( इक्षुवणे शालिवने पद्मसरसि कुसुमिते वा वनखण्डे। गम्भीरे सानुनादे प्रदक्षिणजले जिनगृहे वा ॥ ३४०४ ॥ )
( दद्यान्न तु भग्न भ्रामित (ध्यामित)श्मशान शून्या ऽमनोज्ञगेहेषु। क्षाराङ्गारावस्करामेध्यादिद्रव्यदुष्टेषु ॥ ३४०५ ॥ )

तिस्रोऽपि सुगमाः, नवरमिक्षुवणादीनां समीपे दद्यात् सामायिकम्, न तु भग्न-भ्रामित(प्र० ध्यामित)गृहादिप्रदेशे। द्राक्षा-चन्दनलताद्याच्छादितप्रदेशो गम्भीरः। यत्र जल्पता प्रतिशब्द उत्तिष्ठते स प्रदेशः सानुनाद इति ॥ ३४०३-३४०४-३४०५ ॥

दिगभिग्रहद्वारमाह—

पुव्वाभिमुहो उत्तरमुहो व दिज्जाहवा पडिच्छेज्जा। जाए जिणादओ वा दिसाइ जिणचेइयाइं वा ।३४०६। 

( पूर्वाभिमुख उत्तरमुखो वा दद्यादथवा प्रतीच्छेत। यस्यां जिनादयो वा दिशि जिनचैत्यानि वा ॥ ३४०६ ॥ )

पाठसिद्धा ॥ ३४०६ ॥ कालद्वारमाह—

चाउद्दसिं पण्णरसिं वज्जेज्जा अट्ठमिं च नवमिं च। छट्ठिं च चउत्थिं बारसिं च सेसासु देज्जाहि ॥३४०७॥ 

( चतुर्दशीं पञ्चदशीं वर्जयेदष्टमीं च नवमीं च। षष्ठीं च चतुर्थीं च द्वादशीं च शेषेषु दद्यात् ॥ ३४०७ ॥ )

सुबोधा ॥ ३४०७ ॥ नक्षत्रद्वारमाह—

मियसिर अद्दा पुस्से तिन्नि य पुव्वाइं मूलमस्सेसा। हत्थो चित्ता य तहा दस विद्धिकराइं नाणस्स ॥३४०८
संझागयं रविगयं विड्डेरं(प्र० विड्डरं)सग्गहं विलंबं वा। राहुहयं गहभिण्णं च वज्जए सत्त नक्खत्ते ३४०९

( मृगशिर आर्द्रा पुष्य त्रीणि च पूर्वाणि मूलमश्लेषा। हस्तश्चित्रा च तथा दश वृद्धिकराणि ज्ञानस्य ॥ ३४०८ ॥ )
( सन्ध्यागत रविगतं विड्डेर सग्रहं विलम्बि वा। राहुहत ग्रहभिन्नं च वर्जयेत् सप्त नक्षत्राणि ॥ ३४०९ ॥ )

मृगशिरःप्रभृतिषु नक्षत्रेषु दद्यात् सामायिकम्, सन्ध्यागतादीनि तु वर्जयेत्। तत्र सन्ध्यागत यत्र रविः स्थास्यति। 'यत्र नक्षत्रे सूर्यस्तिष्ठति तस्माच्चतुर्दश पञ्चदश वा नक्षत्रं सन्ध्यागतम्' इत्यन्ये। रविगतं यत्र रविस्तिष्ठति। पूर्वद्वारिकेषु नक्षत्रेषु पूर्वदिशा गन्तव्येऽपरया गच्छतो विड्डेरम्, सग्रहं च क्रूरग्रहाधिष्ठितम्, विलम्बि यद् भास्वता परिभुज्य मुक्तम्, राहुहतं यत्र ग्रहणमभूदिति। ग्रहभिन्नं ग्रहविदारितमिति ॥ ३४०८-३४०९ ॥ गुणसंपद्द्वारमाह—

सामायिकोपसपत् कथम् ?

सामाइयत्थसवणोवसंपया साहुणो हवेज्जाहि । वाघायमेसकालं च पइ सुयत्थं पि होज्जाहि ॥३३९९॥

( सामायिकार्थश्रवणोपसपत् साधोर्भवेत् । व्याघातमेष्यत्कालं च प्रति सूत्रार्थमपि भवेत ॥ ३३९९ ॥ )

यदा गुरुः सूत्रमात्रविदेव भवति, सूत्र चादत्त्वा परलोकीभूतो भवेत्, तदा तच्छिष्यस्य साधोः सामायिकार्थश्रवणनिमित्तमन्यत्रोपसपद् भवेत् । अथवा, 'सुयत्थं पि होज्जाहि' त्ति व्याघातमेष्यत्काल वा प्रति तौ प्रतीत्येत्यर्थः सूत्रमात्रार्थमपि साधोरन्यत्रोपसपद् भवेत् । इदमुक्त भवति—ग्लानभावेन व्यन्तरोपसर्गादिना वा व्याघातेन पतिते विस्मृते सामायिकसूत्रे, एष्यति वा दुःषमाकाले प्रज्ञामान्द्यादसमाप्तसामायिकसूत्रमात्रा अपि साधवो भविष्यन्तो निजगुरुमरणीभवनादिना कारणेन सर्वस्यापि सामायिकसूत्रस्य पठनार्थम्, असमाप्तस्य वा समाप्त्यर्थमन्यत्र साधोरुपसपद् भवेदिति ॥ ३३९९ ॥ तदेव चारित्रसामायिकमङ्गीकृत्य तदर्थश्रवणार्थं तत्सूत्रमात्रपठनार्थं वा साधोरन्यत्रोपसंपदुक्ता ॥ अथवा, श्रुतसामायिकमङ्गीकृत्य समस्तद्वादशाङ्गसूत्रार्थोभयार्थमप्युपसपद् भवेदिति दर्शयन्नाह—

सव्वं व बारसंगं सुयसामइयं ति तदुभयत्थं ति । होज्जालोइयभावस्स देज्ज सुत्तं तदत्थं वा ॥३४००॥

( सर्वं वा द्वादशाङ्ग श्रुतसामायिकमिति तदुभयार्थमिति । भवेदालोचितभावस्य दद्यात् सूत्र तदर्थं वा ॥ ३४०० ॥ )

अथवा, सर्वमपि द्वादशाङ्ग श्रुतसामायिक भण्यते, अतस्तदुभयार्थं समस्तद्वादशाङ्गसूत्रार्थोभयनिमित्तमप्युपसपद् भवेत्, अत आलोचितभावस्य दत्तविशुद्धालोचनस्य सूत्रमर्थं वा दद्यादिति ॥ ३४०० ॥ उक्तमालोचनाद्वारम् ॥ अथ विनयद्वारमभिधित्सुराह—

७ विनयद्वारम्

आलोयणसुद्धस्स वि देज्ज विणीयस्स नाविणीयस्स । न हि दिज्जइ आहरणं पलियत्तियकन्नहत्थस्स ॥३४०१॥

( आलोचनशुद्धायापि दद्याद् विनीताय नाविनीताय । न हि दीयते आहरण परिकर्तितकर्णहस्ताय ॥ ३४०१ ॥ )

सुगमा ॥ ३४०१ ॥ किमिति विनीतस्यैव दीयते ? इत्याह—

अणुरत्तो भत्तिगओ अमुई अणुअत्तओ विसेसन्नू । उज्जुत्तोऽपरितंतो इच्छियमत्थं लहइ साहू ॥३४०२॥

( अनुरक्तो भक्तिगतोऽमोचकोऽनुवर्तको विशेषज्ञ । उद्युक्तोऽपरितान्त इष्टमर्थं लभते साधु ॥ ३४०२ ॥ )

सुबोधा, नवर 'अमुइ त्ति' अमोचकः, उद्युक्त उद्यमपरः, अपरितंतो—अनिर्विण्ण इति ॥ ३४०२ ॥ क्षेत्रद्वारमभिधित्सुराह—

३ क्षेत्रद्वारम्

विणयवओ विय कयमंगलस्स तदविग्घपारगमणाय (प्र० ०णाए) ।

देज्ज सुकओवओगो खित्ताईसु (सू०चू० दव्वाइसु) सुपसत्थेसु ॥३४०३॥

( विनयवतोऽपि च कृतमङ्गलाय तदविघ्नपारगमनाय । दद्यात् सुकृतोपयोग क्षेत्रादिषु सुप्रशस्तेषु ॥ ३४०३ ॥ )

जलेसुइइइइइइइइ

वणे सालिवणे पउमसरे कुसुमिए व वणसडे। गंभीर सोणुणाए पयाहिणजले जिणहरे वा ३४०४

दिज्ज न उ भग्ग-ज्झामिय-(प्र० ज्झामिय)मसाण-सुन्नामणुन्नगेहेसु। छारंगारक्खयारामेज्झाईदव्वदुट्ठेसु

( इक्षुवणे शालिवने पद्मसरसि कुसुमिते वा वनखण्डे। गम्भीरे सानुनादे प्रदक्षिणजले जिनगृहे वा ॥ ३४०४ ॥ )

( दद्याद् न तु भग्न भ्रामित (ध्यामित)श्मशान-शून्या ऽमनोज्ञगेहेषु। क्षाराङ्गारावस्करामेध्यादिद्रव्यदुष्टेषु ॥ ३४०५ ॥ )

तिस्रोऽपि सुगमाः, नवरमिक्षुवणादीनां समीपे दद्यात् सामायिकम्, न तु भग्न-भ्रामित(प्र० ध्यामित)गृहादिप्रदेशे। द्राक्षा-चन्दनलताद्याच्छादितप्रदेशो गम्भीरः। यत्र जल्पतां प्रतिशब्द उत्तिष्ठते स प्रदेशः सानुनाद इति ॥ ३४०३-३४०४-३४०५ ॥

दिगभिग्रहद्वारमाह—

दिगभिग्रह-द्वारम्

पुव्वाभिमुहो उत्तरमुहो व दिज्जाहवा पडिच्छेज्जा। जाए जिणादओ वा दिसाइ जिणचेइयाइं वा।३४०६।

( पूर्वाभिमुख उत्तरमुखो वा दद्यादथवा प्रतीच्छेत्। यस्यां जिनादयो वा दिशि जिनचैत्यानि वा ॥ ३४०६ ॥ )

पाठसिद्धा ॥ ३४०६ ॥ कालद्वारमाह—

कालद्वारम

सि पण्णरसिं वज्जेज्जा अट्ठमिं च नवमिं च। छट्ठिं च चउत्थिं बारसिं च सेसासु देज्जाहि ॥३४०७॥

( चतुर्दशीं पञ्चदशीं वर्जयेदष्टमीं च नवमीं च। षष्ठीं च चतुर्थीं च द्वादशीं च शेषेषु दद्यात् ॥ ३४०७ ॥ )

सुबोधा ॥ ३४०७ ॥ नक्षत्रद्वारमाह—

सिर अद्दा पुस्से तिन्नि य पुव्वाइं मूलमस्सेसा। हत्थो चित्ता य तहा दस विड्ढिकराइं नाणस्स ॥३४०८

ंझागयं रविगयं विड्डेरं(प्र० विड्डर)सग्गहं विलंबं वा। राहुहयं गहभिण्णं च वज्जए सत्त नक्खत्ते ३४०९

( मृगशिर आर्द्रा पुष्य त्रीणि च पूर्वाणि मूलमश्लेषा। हस्तश्चित्रा च तथा दश वृद्धिकराणि ज्ञानस्य ॥ ३४०८ ॥ )

( संध्यागत रविगतं विड्डेरं सग्रहं विलम्बि वा। राहुहत ग्रहभिन्नं च वर्जयेत् सप्त नक्षत्राणि ॥ ३४०९ ॥ )

मृगशिरःप्रभृतिषु नक्षत्रेषु दद्यात् सामायिकम्, संध्यागतादीनि तु वर्जयेत्। तत्र संध्यागत यत्र रविः स्थास्यति। 'यत्र नक्षत्रे सूर्य-स्तिष्ठति तस्माच्चतुर्दश पञ्चदश वा नक्षत्रं संध्यागतम्' इत्यन्ये। रविगतं यत्र रविस्तिष्ठति। पूर्वद्वारिकेषु नक्षत्रेषु पूर्वदिशा गन्तव्येऽपरया गच्छतो विड्डेरम्, सग्रहं च क्रूरग्रहाविष्टितम्, विलम्बि यद् भास्वता परिभुज्य मुक्तम्, राहुहतं यत्र ग्रहणमभूदिति। ग्रहभिन्नं ग्रहविदारितं ॥ ३४०८-३४०९ ॥ गुणसंपद्द्वारमाह—

गुणसंपद्‌-द्वारम्

पियधम्मो दढधम्मो संविग्गोऽवज्जभीरु असढो य। खंतो दंतो गुत्तो थिरव्वय जिइंदिओ उज्जू ३४१०

असढो तुलासमाणो समिओ तह साहुसंगइ(प्र० संगह)रओ य।
गुणसंपओववीओ जुग्गो सेसो अजुग्गो य ॥ ३४११ ॥

( प्रियधर्मो दृढधर्मः संविग्नोऽवद्यभीरुरशठश्च । क्षान्तो दान्तो गुप्तः स्थिरव्रतो जितेन्द्रिय ऋजुः ॥ ३४१० ॥ )
( अशठस्तुलासमानः समितस्तथा साधुसङ्गतिरतश्च । गुणसंपदुपवीतो योग्यः शेषोऽयोग्यश्च ॥ ३४११ ॥ )

सुगमे ॥ ३४१०–३४११ ॥ अथाष्टममभिव्याहारनयमाह—

= अभिव्याहारनय - उद्देशसमुद्देशानुज्ञाकरणम्

नेओऽभिव्वाहारोऽभिव्वाहरणमहमस्स साहुस्स। इयमुद्दिसामि सुत्तत्थोभयओ कालियसुयम्मि ॥
दव्व-गुण(प्र० गुण-दव्व)-पज्जवेहिं भूयावायम्मि गुरुसमाइट्ठे। वेउद्दिट्ठमियं मे इच्छामणुसासणं सीसो ३४१३।

( ज्ञेयोऽभिव्याहारोऽभिव्याहरणमहमस्य साधोः । इयमुद्दिशामि सूत्रार्थोभयतः कालिकश्रुते ॥ ३४१२ ॥ )
( द्रव्य-गुण(प्र० गुण-द्रव्य) पर्यायैर्भूतवादे गुरुसमादिष्टे । ब्रवीत्युद्दिष्टमिदं मे इच्छाम्यनुशासनं शिष्यः ॥ ३४१३ ॥ )

व्याख्या– अभिव्याहरणमभिव्याहारः सामायिकश्रुतोद्देशादिविषयो गुरुशिष्ययोरुक्ति-प्रत्युक्तिविशेषो ज्ञेयः, तद्यथा– अहमस्य साधोः कालिकश्रुते इदमङ्गं श्रुतस्कन्धमध्ययनमुद्देशकं वा 'उद्दिस्सामि' वाचयामि। कथम्? इत्याह–सूत्रतः, अर्थतः, तदुभयतश्चेति (ग्र०—२७०००)। इह च सूचनात् सूत्रस्य, इयं भावना द्रष्टव्या–'इदमङ्गादिकं ममोद्दिशत' इति शिष्येणोक्ते गुरुर्वदति–'उद्दिशामि'। ततः शिष्यो भणति–'संदिशत किं भणामि ?'। गुरुराह–'वन्दित्वा प्रवेदय'। ततः शिष्यो वदति–'भवद्भिर्ममेदमङ्गादिकमुद्दिष्टम्'। गुरुराह–'उद्दिष्टं क्षमाश्रमणानां हस्तेन सूत्रेण, अर्थेन, तदुभयेन च।' ततः शिष्य आह–'इच्छामोऽनुशास्तिम्'। ततश्च गुरुराह–'सम्यग् योगः कर्तव्यः' इति। अत्रेच्छाकार-क्षमाश्रमणदान-प्रणिपात कायोत्सर्गकरणादिकः शेषो विधिः स्वयमेव द्रष्टव्यः। समुद्देशा–ऽनुज्ञयोरप्ययमेव विधिः, नवरं तयोर्यथासंख्यं 'स्थिरपरिचितं कुरु', 'सम्यग् धारय, अन्येषां च प्रवेदय' इति गुरुवचनं द्रष्टव्यमिति। भूतवादो (प्र० भूतावादो) दृष्टिवादः, तत्राप्ययमेवोद्देशादिविधिः केवलं 'द्रव्येण, गुणैः, पर्यायैश्च उद्दिष्टमिदम्' इति गुरुः समादिशति। एवं च गुरुसमादिष्टे शिष्यो वदति–'उद्दिष्टमिदं मे, इच्छाम्यनुशास्तिम्' इत्यादीनि। तदेवं व्याख्यातोऽभिव्याहारनयः, तद्व्याख्याने च व्याख्याता 'आलोयणा य विणए' इत्यादिप्रतिद्वारगाथा ॥ ३४१२–३४१३ ॥ अथ मूलद्वारगाथायां यदुक्तम्—'करणं कतिविधम् ?' इति, तत्राह—

करणं तव्वावारो गुरु-सीसाणं चउव्विह तं च। उद्देसो वायणिआ (प्र०, वायणया) तहा समुद्देसणमणुन्ना ॥

( करणं तद्व्यापारो गुरु-शिष्ययोश्चतुर्विधं तच्च । उद्देशो वाचनिका तथा समुद्देशनमनुज्ञा ॥ ३४१४ ॥ )

पूर्वैहिक-करणभेद

गुरु शिष्ययोस्तद्विषयः सामायिकविषयो व्यापारः करणम् । स च गुरु-शिष्ययोस्तद्व्यापारश्चतुर्विध', तच्चातुर्विध्यात् तत्स्वरूपं करण-
मपि चतुर्विधम् ; तद्यथा- वाचयामि' इति गुरुप्रतिज्ञारूप उद्देशः, ततस्तत्प्रदत्तैव सूत्रस्य परिपाटीरूपा वाचना, तथा, समुद्देश', अनुज्ञा चेति ।
॥ ३४१४ ॥ अत्राक्षेप परिहारावाह—

**नणु भणियमणेगविहं पुव्वं करणमिह किं पुणो गहणं । तं पुव्वगहियकरणं इदमिह दाणग्गहणकाले**

( ननु भणितमनेकविध पूर्वं करणमिह किं पुनर्ग्रहणम् । तत् पूर्वगृहीतकरणमिदमिह दानग्रहणकाले ॥ ३४१५ ॥ )

ननु पूर्वं नामादिभेदतोऽनेकविध करणमुक्तम्, इह किं पुनरपि भेदकथनगर्भं करणग्रहणम् ? । अत्रोच्यते– तत् प्रागुक्त पूर्वगृहीतस्य दानग्रहणकालादुत्तीर्णस्य सामायिकस्य सिद्ध करणमुक्तम्, इद त्विह गुरु-शिष्ययोर्दान-ग्रहणकाले उद्देशादिविधिना साध्य करणमुच्यत इति विशेषः ॥ ३४१५ ॥ विशेषान्तरमाह—

**पुव्वमविसेसियं वा इह गुरु-सीसकिरियाविसेसाओ । करणावसरो वायं णेगंतत्थं तु वच्चासो॥३४१६॥**

( पूर्वमविशेषित वेह गुरु शिष्यक्रियाविशेषात् । करणावसरो वायमनेकान्तार्थं तु व्यत्यास ॥ ३४१६ ॥ )

अथवा, पूर्वमविशेषित करणमुक्तम्, इह तु तदेव गुरु-शिष्योक्तिप्रत्युक्तिक्रियाविशेषाद् विशेषितमुच्यते । अथवा, अयमेव गुरु शिष्योक्ति प्रत्युक्तिकाले सामायिककरणस्य भणनावसरः । तत्र तर्हि किमित्युक्तम् ? इति चेत् । उच्यते– अनेकान्तार्थं तु व्यत्यासोऽस्थानभणनम् । न ह्यय नियमो यदन्यत्र वक्तव्यं तदत्र नोच्यते, विचित्रा च भगवतः सूत्रस्य कृतिरिति ॥३४१६॥ गत 'करणं कतिविधम् ?' इति द्वारम् ॥

इदानीं 'कथम् ?' इति द्वारमभिधित्सुराह—

कथं लभ्यते सामायिक

**लब्भइ कहं ति भणिए सुयसामइयं जहा नमोक्कारो । सेसाइ तदावरणक्खयओ समओऽहवोभयओ॥**

( लभ्यते कथमिति भणिते श्रुतसामायिक यथा नमस्कार । शेषाणि तदावरणक्षयत शमतोऽथवोभयत ॥ ३४१७ ॥ )

'कथ सामायिक लभ्यते ?' इति भणिते सत्युच्यते– श्रुतसामायिक तावद् यथा नमस्कारः पूर्वमुक्तस्तथा लभ्यते, नमस्कारस्यापि श्रुतान्तर्गतत्वात् । नमस्कारलाभश्च पूर्वमित्थमुक्तः— 'मइ सुयनाणावरण दसणमोहं च तदुवघाईणि । तप्फड्डयाइ दुविहाइ सव्व देसोवघाईणि । १ ॥ सव्वेसु सव्वघाइसु हएसु देसोवघाइयाणं च । भाएहि मुच्चमाणो समए समए अणतेहिं ॥ २ ॥ पढम लहइ नकार इक्किक्क वण्णमेवमण्ण पि कमसो विमुज्झमाणो लहइ समत्त नमोक्कारं ॥ ३ ॥ ( मति श्रुतज्ञानावरण दर्शनमोह च तदुपघातीनि । तत्स्पर्द्धकानि द्विविधानि सर्व देशोपघातीनि ॥१॥ सर्वघातिषु हतेषु देशोपघातिकाना च । भागैर्मुच्यमान समये समयेऽनन्तै ॥ २ ॥ प्रथम लभते नकारमेकैक वर्णमेवमन्यमपि । क्रमशो विशुध्यन् लभते समस्त नमस्कारम् ॥ ३॥ इह च सम्यग्दृशामेव नमस्कारो भवतीत्येतावन्मात्रेणैव दर्शनमोहनीयस्य क्षयोपशम उक्तः, मुख्य-

वृत्त्या तु नमस्कारस्य श्रुतरूपत्वात्, तदावरणक्षयोपशमादेवासौ लभ्यत इत्युक्तं द्रष्टव्यम् । एवं श्रुतसामायिकमपि मति श्रुतक्षयोपशमाल्लभ्यत इति दृश्यम् । शेषाणि तु सम्यक्त्व-देशविरति-सर्वविरतिसामायिकानि तदावरणस्य यथासंभवं क्षयतः शमतः-उपशमत इत्यर्थः, अथवोभयतः क्षयोपशमाद् भवन्तीति द्रष्टव्यमिति ॥ ३४१७ ॥ अत्राक्षेप-परिहारावाह-

## नणु भणियमुवक्कमया खओवसमओ पुणो उवग्घाए। लब्भइ कहं ति भणियं इहं कहं का पुणो पुच्छा ?

( ननु भणितमुपक्रमता क्षयोपशमतः पुनरुपोद्घाते । लभ्यते कथमिति भणितमिह कथं का पुनः पृच्छा ? ॥ ३४१८ ॥ )

आह- ननु पूर्वमत्रैवोपक्रमतोपक्रमप्रस्तावे 'भावे खओवसमिए दुवालसंग पि होइ सुयनाणं' तथा, 'बीयकसायाणुदए अप्पच्चक्खाण-नामधिज्जाणं' तथा, 'तइयकसायाणुदए पच्चक्खाणावरणनामधिज्जाणं, देसिक्कदेसविरइं' तथा, 'बारसविहे कसाए खविए उवसामिए व जोएहिं लब्भइ चरित्तलंभो' ( भावे क्षायोपशमिके द्वादशाङ्गमपि भवति श्रुतज्ञानम् । द्वितीयकषायाणामुदयेऽप्रत्याख्याननामधेयानाम् । तृतीयकषायाणामुदये प्रत्याख्यानावरणनामधेयानां देशैकदेशविरतिम् । द्वादशविधे कषाये क्षपिते औपशमिके वा योगैर्लभ्यते चारित्रलाभः । ) इत्यादिवचनात् तदावरणस्य क्षयोपशमात् क्षयादिभ्यश्च सम्यक्त्वादिसामायिकानि लभ्यन्त इति भणितम्, पुनरपि चोपोद्घाते 'किं कइविहं' इत्यादिगाथायां 'कथं सामायिकं लभ्यते ?' 'मानुष्यादिभ्यः' इति भणितम्; ततश्चेह 'कथं सामायिकं लभ्यते' इति का पुनः पृच्छा ?-पुनरुक्तत्वाद् नेयमिह युज्यत इति भावः ॥ ३४१८ ॥ परिहारमाह-

## भणिए खओवसमओ स एव लब्भइ कहमुवग्घाए। सो चेव खओवसमो इह केसिं होज्ज कम्माणं ? ॥३४१९॥

( भणिते क्षयोपशमतः स एव लभ्यते कथमुपोद्घाते । स एव क्षयोपशम इह केषां भवेत् कर्मणाम् ? ॥ ३४१९ ॥ )

'भावे खओवसमिए' इत्यादिनोपक्रमे 'क्षयोपशमादिहेतोः सामायिकं लभ्यते' इति भणिते पुनरुपोद्घाते 'स एव क्षयोपशमादिहेतुः कथं लभ्यते ?' 'मानुष्यादिसामग्रीतः' इत्युक्तम् । इह तु 'स एव क्षयोपशमादिः केषां कर्मणां भवेत् ?' इति विचिन्त्यत इति स्थानत्रयभणनस्यापि विषयविभाग इति ॥ ३४१९ ॥ तदेवं व्याख्यातं कृताकृतादिद्वारैः करणम् ॥

अथ 'करोमि भदन्त ! सामायिकम्' इत्यत्र विनेयपृच्छामाशङ्क्योत्तरमाह-

## को कारओ करिंतो किं कम्मं जं तु कीरई तेणं। किं कारओ य करणं च होइ अन्नं अणन्नं ते ? ॥३४२०॥ कारक, कर्म, करण च

( कः कारकः कुर्वन् किं कर्म यत्तु क्रियते तेन । किं कारकश्च करणं च भवत्यन्यदनन्यत् ते ?॥ ३४२० ॥ )

कोऽत्र तावत् कारकः ? इति कथ्यताम् । सूरिराह- स्वतन्त्रत्वात् कुर्वन् सामायिकस्य कर्ता । कर्म तर्हि किमत्र ? इत्याह-यत् तेन क्रियते । तुशब्दात् किं करणम् ? । उच्यते-मनःप्रभृति । एवमुक्ते सत्याह- ते तव सूरे ! किं कारकः करणं चशब्दात् कर्म चेत्येतत् त्रय

परस्परमन्यद् भिन्नम्, अनन्यद् वाऽभिन्नं भवति ? इति ॥ ३४२० ॥ एतदेव विवृण्वन्नाह–

**को कारउ त्ति भणिए होइ करेंतो त्ति भण्णए गुरुणा। किं कम्मं ति य भणिए भण्णइ जं कीरए तेणं ।३४२१।**

( क कारक इति भणिते भवति कुर्वन्निति भण्यते गुरुणा। किं कर्मेति च भणिते भण्यते यत् क्रियते तेन ॥ ३४२१ ॥ )

गतार्था ॥ ३४२१ ॥ अत्र 'कः कारकः ?' इत्यादित एव प्रश्नमक्षममाणः परस्तावदाह–

**केण कयं ति य कत्ता नणु भणियं तत्थ का पुणो पुच्छा ?। तव्विवरणं चिय इमं केणं ति व होज्ज मा करणं**

( केन कृतमिति च कर्ता ननु भणितं तत्र का पुन पृच्छा। तद्विवरणमेवेद केनेति वा भूद् मा करणम् ॥ ३४२२ ॥ )

आह–ननु 'कयाकय' इत्यादिगाथायां 'केन कृतम्' इति द्वितीयद्वारे 'कर्त्ता' इति भणितमेव, तत्र, का पुनरपीह कर्तुः पृच्छा ? । सत्यम्, किन्तु 'केन कृतम्' इत्यत्र कर्तरि करणे च तृतीया संभवति, अतस्तद्विवरणमेवेदम्–'केन' इत्यत्र कर्तरि तृतीया, मा भूत् करणमिति ॥ ३४२२ ॥ अथवा, तेष्वेव कृताकृतादिद्वारेषु सामायिकस्य कर्तारं कर्म करणभावं च श्रुत्वा कुलाल-घट दण्डानामिव प्रस्तुते कर्तृ-कर्म-करणानां प्रविभागमपश्यन् पृच्छति–कः कारकः सामायिकस्य ? इत्यत्रोत्तर कुर्वन्नयमस्य कारकः; किं पुनः कर्म ? इत्यत्रोत्तरम्–यत् तेन कर्त्रा क्रियते; तुशब्दाद् मनःप्रभृति करणं च द्रष्टव्यम्। एतदेवाह—

**अहवा कयाकयाइसु कत्तारं कम्म करण भाव च। सामाइयस्स सोउं कुलाल-घड-दण्डगाणं व ॥ ३४२३**

**पविभागमपेच्छंतो पुच्छइ को कारओ करेंतोऽयं। किं कम्मं जं कीरइ तेण तु सद्देण करणं च ॥३४२४॥**

(अथवा कृताकृतादिषु कर्तारं कर्म करणभाव च। सामायिकस्य श्रुत्वा कुलाल घट दण्डकानामिव ॥ ३४२३ ॥ )

( प्रविभागमपश्यन् पृच्छति क कारक कुर्वन्नयम्। किं कर्म यत् क्रियते तेन तु शब्देन करण च ॥ ३४२४ ॥ )

द्वे अपि गतार्थे ॥ ३४२३-३४२४ ॥ अत्राक्षेपमाह—

**किं कारओ य करणं च होइ कम्मं च ते चसद्दाओ। अन्नमणन्नं, भण्णइ किंचाह न सव्वहा जुत्तं।३४२५**

( किं कारकश्च करण च भवति कर्म च ते चशब्दात। अन्यदनन्यत्, भण्यते किञ्चाह न सर्वथा युक्तम् ॥ ३४२५ ॥ )

कारकः करणं चशब्दात् कर्म च ते तव सूरे ! परस्पर किमन्यद् भिन्नम्, अनन्यद्वाभिन्नमिति ? । भण्यतेऽत्रोत्तरम्– किंचातः ?— किमनेन तव पृष्टेन ? इति। अत्राह परः–अन्यत्वमनन्यत्वं वेति (प्र० . चेति) द्वयोरेकमपि सर्वथा न युक्तमिति ॥३४२५ ॥

अत्रान्यत्वे तावद् दूषणमाह—

